THE

PRINCESS OF WALES

Sarasvati Bhavana Texts

EDITED BY

GOPI NATHA KAVIRAJA

No. 40

( *PART 1* )

# THE

# KĀLATATTVAVIVECHANA

PRINTED BY

B. C. BANERJEE

AT THE

**Ramkrishna Printing Works,**

BENARES CITY.

1932

सम्राट्स्थपतिश्रीरघुनाथभट्टप्रणीतं

# कालतत्त्वविवेचनम्

( प्रथमो भागः )

जयपुरराजगुरुकथाभट्टवंशावतंसेन

कथाभट्टश्रीजयचन्द्रजनुषा वेदान्तभूषणोपाधिभूषितेन

नन्दकिशोरशर्मणा साहित्याचार्येण

टिप्पण्यादिना समलंकृत्य सम्पादितम् ।




THE

# KĀLATATTVAVIVECHANA

BY

## RAGHUNĀTHA BHAṬṬA

*With a Foreword by*

PRINCIPAL GOPINATH KAVIRAJ

Edited with Introduction, Notes, etc.

*By*

**NANDA KISHORE SHARMA**

*Sāhityāchārya, Vedāntabhūshana, Research Scholar,*

*Government Sanskrit Library,*

*BENARES.*



**1932.**

# FOREWORD.

Thanks to the enterprise of industrious scholars and of the patrons of ancient Sanskrit Learning, the important works of Sanskrit literature are being slowly reclaimed from oblivion and placed before the public. In Dharma Śāstra, however, as in some other branches, there remains yet a huge mass of literary material waiting for the editorial adventure of the skilled workman and for publication. The work presented in the following pages represents an important piece of literary composition in the field of Dharma Śāstra and has a position of its own in its history.

The Kālatattva Vivechana of Raghunātha Bhaṭṭa, known under the designation of *Samrāṭ Sthapati*, deals with all the important questions relating to the observance of *tithi*, etc. The relative value of this work can be determined by a reference, by way of comparison, to other works of a similar nature belonging to the same or to the rival schools. But there appears to be no doubt, as a cursory glance through the pages will suffice to show, that for a student of Dharma Śāstra from a comparative standpoint a careful study of the book is sure to yield interesting results.

The author was the second son of Mādhava Bhaṭṭa, the youngest brother of the famous Nārāyaṇa Bhaṭṭa, who was one of the most learned authors at Benares in the 16th century. Nārāyaṇa was the author of Dharma pravṛitti, Prayoga ratna, etc. and was a

contemporary of the great philosopher Madhu Sūdana Sarasvatī with whom he often took part in literary polemics. Raghunātha had an elder brother named Viśvanātha and a younger one whose name was Prabhākara and whose most promising career was cut short by an untimely death. It was this Prabhākara Bhaṭṭa who wrote the Rasapradīpa ( published in this Series as No. 12 ) in the year 1593 A. D. The Kālatattva Vivechana was composed in Saṃvat 1677 ( =1620 A. D. ). The author describes himself as well versed in Dharma Śāstra and Mīmāṃsā ( मीमांसाधर्मशास्त्रेषु सम्यक्कृतपरिश्रमः ) and is credited with the composition of several treatises on these subjects. It may be noted here for general information that Rama Chandra Bhaṭṭa Tatsat, the well known author of Krityaratnāvalī ( written in 1648 A. D. ) and Kālanirṇayaprakāśa was the daughter's son of Raghunātha.

The present edition of the work undertaken by one of the Sadholal Research Scholars of the Sanskrit College, is based on a single manuscript belonging to the Library of the College bearing Saṃvat 1745 ( =1688 A. D. ) as the date of its transcription.

A detailed study of the work and its author, both historically and critically on the basis of its contents, will follow shortly in the Introduction in the second part.

Government Sanskrit College, BENARES. } GOPINATHA KAVIRAJ.

॥ श्रीः ॥

सम्राट्स्थपतिश्रीरघुनाथभट्टप्रणीतं

# कालतत्त्वविवेचनम् ।

पितरं माधवमम्बां ललितां नारायणं पितृव्यं च ।
सहजमथ विश्वनाथं गणपतिमीशां च शारदां नत्वा ॥
रामं च सीतयोपेतं रघुनाथेन रच्यते ।
सम्राट्स्थपतिना सम्यक् कालतत्त्वविवेचनम् ॥
तत्रादौ बहुवाच्यत्वात्तिथितत्त्वं विविच्यते ।
पश्चान्मासाऽधिमासादि यथामति विवेक्ष्यते ॥

तत्र तिथिर्नाम अमासंज्ञकसर्वानुस्यूतनित्यकलाव्यतिरिक्तानां प्रतिपद्द्वितीयादिसंज्ञानां पञ्चदशचन्द्रकलानां मध्ये एकैकस्याः कलायाश्चन्द्रमण्डलस्य सूर्यमण्डलेन सह परमसन्निकर्षानन्तरं विप्रकर्षः परमविप्रकर्षानन्तरं वा सन्निकर्षो यावता कालेन भवति तावान् कालो यथाक्रमं शुक्लकृष्णपक्षगतो लक्षणया प्रतिपद्द्वितीयादिशब्दैः प्रतिपाद्यः ।

तथोक्तं स्कान्दे प्रभासखण्डे—

"अमाषोडशभागेन देवि प्रोक्ता महाकलाः ।
संस्थिता परमा माया देहिनां देहधारिणी ॥
अमादिपौर्णमास्यन्ता या एव शशिनः कलाः ।
तिथयस्ताः समाख्याताः षोडशैव वरानने" ॥ इति ॥

षट्त्रिंशन्मतेऽपि—

"तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि ।
चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥
(१) पक्षत्याद्यास्तु तिथयः क्रमात्पञ्चदश स्मृताः ।
दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके" ॥ इति ॥

तासां च तिथीनां विधिनिषेधाङ्गत्वं सप्तम्या तत्र तत्र प्रसिद्धमेव । न च "निमित्तं कालमादाय वृत्तिर्विधिनिषेधयो" रिति वचनाद् "वसन्ते वसन्ते ज्योतिषे" तिवत् सा सप्तमी निमित्ते न त्वधिकरण इति वाच्यम् । उपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वात् । "वसन्ते वसन्ते" इत्यत्र तु वीप्साबलात्तां परित्यज्य निमित्तसप्तम्याश्रिता । निमित्तत्वोक्तिस्त्वनुपादेयत्वसाम्यात्, "न कालो गुणो निमित्तं ह्य तदिति" शाबरोक्तिवत् । यस्य तर्हि तिथ्यादेर्वीप्सायोगस्तस्य वसन्तवन्निमित्तत्वमेव स्यान्नत्वङ्गत्वम् । सिद्धयति तस्याप्यङ्गत्वम् । तथा हि तस्मिन्काले निमित्ते विहितस्य प्रयोगस्य कालाकाङ्क्षायामुपस्थितत्वात्तस्यैवाङ्गत्वेनाऽप्यन्वयः । न च वाक्यभेदः । यत्र तावन्निमित्तसम्बन्धेनापूर्वकर्मोत्पत्तिस्तत्र सम्यगेव । यत्रापि विध्यन्तरेणोत्पन्नस्य निमित्तमात्रसम्बन्धस्तत्रापि प्रयोगस्यापूर्वस्यैव विधानात्तदनुबन्धस्य विशेषणस्यैकस्यानेकस्यापि वा सिध्यत्यावृत्तिं विनैव विशिष्टविधिन्यायेन विधिः, 'राजा राजसूयेने' त्यत्र राज्ञ इव । अत एव ज्योतिष्टोमस्य नैमित्तिकप्रयोगविधायित्वेन सर्वेषां सम्मतं वीप्सायुक्तवसन्तवाक्यमेव तस्य वसन्तकालकत्वे प्रमाणत्वेन यज्ञसूत्रभाष्यकाराणां निबन्धॄणां च सम्मतम् । यस्य तु सङ्क्रान्त्यादिकालस्य सूक्ष्मत्वाद्दीर्घकालश्राद्धादिकर्माङ्गत्वासम्भवस्तत्सम्भवेऽपि वा यत्र वचनादेव निमित्तभूतकालपूर्वोत्तरान्यतरकालस्याङ्गत्वं कर्मणि, रविवारनिमित्तस्नाना-

(१) पक्षतिः प्रतिपद् ।

कश्चिच सूर्योदयपूर्वकालस्य तत्र तस्य निमित्तत्वमेवेति दिक् ।

सा च तिथिर्द्विविधा सम्पूर्णा खण्डा च ।

तत्र सम्पूर्णोक्ता नारदीये—

"आदित्योदयवेलाया आरभ्य षष्टिनाडिकाम् ।
सम्पूर्णा इति विख्याता हरिवासरवर्जिता" ॥ इति ॥

सूर्योदयाऽस्तमयव्यापित्वेनापि तिथेः सम्पूर्णत्वं रात्रिमात्राहोरात्रान्यतरसाध्यकर्मव्यतिरिक्तकर्मसु भवति ।

तदुक्तम्—

"अहःसु तिथयः पुण्याः कर्मानुष्ठानतो दिवा ।
नक्तादिव्रतयोगेषु रात्रियोगो विशिष्यते" ॥ इति ॥

दिवैव कर्मणामनुष्ठानमित्युत्सर्गो यतः, अतो हेतोरहःसु यास्तिथयस्ताः पुण्या इत्यर्थः । "त्रिसन्ध्यव्यापिनी यत्र सैव पूज्या सदा तिथि" रिति च । प्रातर्मध्याह्नसायंसन्ध्याव्यापिनीत्यर्थः । न तु प्रातःसन्ध्याद्वयं सायंसन्ध्येति च सन्ध्यात्रयम् । संख्यायाः पृथक्त्वनिवेशितत्वात् । दिवैव च प्रायः कर्मणामनुष्ठानम्, पूर्वाह्णो देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणामित्यहर्भागेष्वेव दैवादिकर्मविधानात् ।

"स्नानं दानं जपः श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत्" ॥ इति ॥

"सूर्योदयं विना नैव स्नानदानादिकं क्रिया" इत्यादिभिः सामान्येन सकलकर्मसु रात्रिनिषेधाच्च । "प्रातःसन्ध्यां बुधः कृत्वा संकल्पं तत आचरे" दिति सामान्यतः सर्वकर्मणां दिनाधिकारे

सङ्कल्पविधानाच्च । जैमिनिनापि "उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शना" दित्युदगयनादिसाधारण्येनाहः सर्वकर्मकालत्वमुक्त्वा अह्नि विशेषोपपत्तिरुक्ता । अहनि च कर्मसाकल्यमिति । तस्मात् कृत्स्नाहर्मात्रव्यापिन्यपि तिथिः केषुचित् सम्पूर्णैव । अत एव च तिथ्यन्तरवेधोऽप्युदयास्तमयान्तराल एव प्रायो व्यवह्रियते न तूदयात्पूर्वमस्तमयोत्तरं वा ।

सम्पूर्णेतरा खण्डा । तत्र च सन्दिग्धत्वात् खण्डैव निर्णेतव्या न तु सम्पूर्णा असन्देहात् । सन्देहश्च गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वेन कर्मणः सकृत्कर्तव्यत्वात् । अत एव निषेधेषु खण्डापि न निर्णेया । निवृत्तेर्यावत्तिथिभावित्वेन निर्णीतत्वादसन्देहात् ।

तदाह वृद्धगार्ग्यः—

"निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः ।
विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके ॥
तिथीनां पूज्यता नाम कर्मानुष्ठानयोग्यता ।
निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते" ॥ इति ॥

न च केवलं वाचनिक एवायमर्थः, किन्तु न्याय्योऽपीति निषेधस्त्वित्यनेन सूचयति । तथा हि विधिषु विधेयानुष्ठानस्याभ्युदयहेतुत्वं प्रमेयम् । सकृदनुष्ठानादेव चाभ्युदयसिद्धेस्तिथिद्वैधे कुत्रानुष्ठेयमिति विधेये जायते सन्देहः । निषेधेषु तु कालविशेषे कर्मविशेषानुष्ठानस्यानर्थहेतुत्वं प्रमेयम् । यदा कदापि च तत्काले तत्कर्मानुष्ठानेनार्थप्रसङ्गात्सर्वदैव तत्काले तद्वर्ज्यं भवतीति तत्र नास्ति सन्देह इति ।

नन्वेवं वचनात् न्यायतश्च कालविशेषप्रयुक्तसर्वनिषेधानां तावत्कालिकत्वसिद्धौ अभ्यङ्गमैथुनदन्तधावननिषेधेषु पुनस्तावत्कालिकत्ववचनं किमर्थम् ?

"अभ्यङ्गे चोदधिस्नाने दन्तधावनमैथुने ।
जाते च मरणे चैव तत्कालव्यापिनी तिथिः" ॥ इति ॥

न च तत्तत्तिथौ कृत्स्नायामननुष्ठानस्य न्यायवचनसिद्धत्वेऽपि उदयास्तमयवर्त्तित्वेन साकल्यवचनात्तद्वर्त्तितत्तिथिस्पृष्टायामितरतिथावपि प्रसक्तस्य तस्य निवृत्त्यर्थं तद्वचनमिति वाच्यम् । तिथिविशेषप्रयुक्तस्य निषेधस्येतरतिथावप्रसक्तेरेव । न हि साकल्यवचनमेव प्रसञ्जकम् । तत्तत्कर्मकालभूताहर्भागविशेषे तत्तत्तिथेरभावेऽपि न्यायाद्वचनाद्वा तद्दिने विधिविषयकर्मानुष्ठाने निर्णयेन प्राप्ते तत्तदहर्भाग एव तत्तत्कर्मानुष्ठानार्थं हि तदित्यग्रे व्यक्तं भविष्यति । न च तदर्थस्य तस्य निषेधेषु कश्चिदुपयोगो येन तदपवादार्थं तात्कालिकवचनमवकाशं लभेतेति । सत्यम् । विधेयकर्मविशेषविषय एव साकल्यापवादार्थे तस्मिन्वचने निषेध्यानां केषांचिदुपादानं दृष्टान्तत्वेन । जननमरणयोरिव । न हि जननमरणयोरननुष्ठेययोः साकल्यवचनं प्रवर्तते येन तदपवादः कर्तव्यः । साकल्यवचने स्नानदानजपादिष्वित्यादिशब्देन तदर्थकेन च दानाध्ययनकर्मस्विति बहुवचनेनानुष्ठेयानामेव कर्मणां ग्रहणात् । अत एव निषेध्यानामप्यसादृश्यात्तत्रानुपादानम् । न च जननमरणाभ्यां तन्निमित्तकस्यानुष्ठेयकर्मण एवोपादानम् । तन्निमित्तकश्राद्धादौ साकल्यस्येष्टत्वादेव तदपवादासम्भवात् । तस्माज्जननमरणयोस्तद्वच्च निषेध्यानामपि दृष्टान्ततयैव तत्रोपादानम् । अत एव तत्तत्तिथिविशेषाधिकरणकोत्पातादिनिमित्तानां सकलनिषेध्यानां चोपलक्षणमेव तद्ग्रहणमिति । अतो विधिविषयकर्मसु खण्डाऽसन्देहान्निर्णेतव्या ।

तानि च कर्माणि दैवपित्र्यभेदेन द्विविधानि । पितृदैवत्यानि पित्र्याणि । तद्भिन्नानि दैवानि । दैवान्यपि उपवासैकभक्तनक्ताऽयाचितव्रतदानरूपेण षड्विधानि । पित्र्याण्यपि एकोद्दिष्टपार्वणदैवरूपेण त्रिविधानि । तानि च सर्वाणि यथा तत्तत्तिथ्यादिषु विहितानि तथो-

पवासातिरिक्तानि प्रातरादिष्वहोरात्रभागेष्वपि विहितानि।' अह्नश्च पञ्चदशमुहूर्त्तात्मकस्य भागा द्वेधा त्रेधा चतुर्धा पञ्चधा च श्रुतिस्मृतिपुराणेषूक्ताः। तथापि बहुसंमतत्वाद् बहुव्यवहारानुगुणत्वाच्च प्रातःसङ्गवमध्याह्नापराह्णसायाह्नात्मकः पञ्चधाविभाग एव त्रित्रिमुहूर्त्तात्मक उत्सर्गतो गृह्यते।

स च वृद्धपाराशरेणोक्तः—

"लेखाप्रभृत्यथादित्यान्मुहूर्त्तास्त्रय एव च।
प्रातस्तु स स्मृतः कालो भागश्चाह्नः स पञ्चमः॥
सङ्गवस्त्रिमुहूर्त्तोऽथ मध्याह्नस्तत्समः स्मृतः।
ततस्त्रयो मुहूर्त्ताश्च अपराह्णो विधीयते॥
पञ्चमोऽथ दिनांशो यः स सायाह्न इति स्मृतः।
यद्यदेतेषु विहितं तत्तत्कुर्याद्विचक्षणः" ॥ इति ॥

द्वेधा विभागादयस्तु यत्र कश्चिद्द्योतकं तत्रैव ग्रहीतव्याः। एतत्सर्वं तत्तत्कर्मविशेषस्य तत्तद्भागकालकत्वं च तत्तत्कर्मविशेषेण तिथिनिर्णये वक्ष्यते। उपवासश्चाहोरात्राभोजनसंकल्पपरिपालनरूपोऽहोरात्रसाध्यः। एकभक्तनक्तायाचितेष्वपि विशेष्यमात्रं मध्याह्नादिसाध्यं विशेषणांशस्त्वहोरात्रसाध्य एव। तदहोरात्रावच्छिन्नद्वितीयभोजनाभावविशिष्टं हि मध्याह्नभोजनं एकभक्तम्। तादृशमेव प्रदोष—भोजनं नक्तम्। अयाचितलब्धस्य तादृशमेव सकृद्भोजनमयाचितम्। तत्र कालस्यानुपादेयत्वाद्यथा तत्तत्तिथिपरित्यागेन कर्म कर्तुं न शक्यते तथा तत्तदहर्भागपरित्यागेनापीति तत्तद्व्यापिनी तिथिस्तत्र तत्र कर्मणि ग्राह्येत्युत्सर्गः।

"कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्" ॥

इति वृद्धयाज्ञवल्क्यवचनात् । नन्वन्यान्यपि खण्डतिथेर्निर्णायकानि वचनानि दृश्यन्ते । तत्र विष्णुधर्मोत्तरे तावत्—

"नक्षत्रं देवदेवेश तिथिं चार्द्धविनिर्गताम् ।
दृष्ट्वोपवासः कर्तव्यः कथं शङ्कर जानता ॥

ईश्वर उवाच—

सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥
सा तिथिस्तदहोरात्रं यस्यामस्तमितो रविः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥
शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रवि" रिति ॥

देवलोऽपि—

"यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नानदानव्रतादिषु ॥
यां तिथिं समनुप्राप्य अस्तं याति च भास्करः ।
सा तिथिः सकला ज्ञेया स्नानदानजपादिषु" ॥ इति ॥

क्वचिदुदयवाक्ये दानाध्ययनकर्मस्विति । अत एव विष्णुधर्मोत्तरगतप्रश्नवाक्ये उपवासग्रहणमुपलक्षणम् । अत एव च—

"दैवे कर्मणि संप्राप्ते यस्यामभ्युदितो रविः ।
सा तिथिः सकला ज्ञेया पित्र्यर्थे चापराह्णिकी"

इति मार्कण्डेयपुराणवचनात्,

"ययास्तं सविता याति पितरस्तामुपासते ।
तिथिं तेभ्यो यतो दत्तो ह्यपराह्णः स्वयम्भुवे" ति ॥

परिशिष्टवचनाच्च प्रतीयमाना उदयास्तमयगततिथ्योर्दैवपित्र्यविषयत्वेन व्यवस्थाप्ययुक्ता। पूर्ववचने दैवेऽपि कर्मण्यस्तमयतिथेर्ग्राह्यत्वाभिधानात्। किन्तु शुक्लकृष्णपक्षविषयत्वेनैव। अनयोस्तु वचनयोः पित्र्येऽस्तमयव्यापितिथिविधान एव तात्पर्यम्। तत्रौचित्येन स्तुत्यर्थं दैवे उदयव्यापितिथेर्ग्राह्यत्वं पूर्ववचनसिद्धमनूद्यते। वैखानसविधिपरे "वैखानसं पूर्वेऽहन्साम भवतीत्यत्र षोडश्युत्तरे" इतिवत्। तथा युग्मवाक्यगत्तिथिविशेषविषयत्वेनाऽपि उदयास्तमयतिथिग्राह्यत्वस्य व्यवस्था प्रतीयते। तथा च निगमसंज्ञके परिशिष्टे—

"युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः।
रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा॥
प्रतिपदाप्यमावास्या तिथ्योर्युग्मं महाफलम्।
एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृत" मिति॥

युग्मं द्वितीया। अग्निस्तृतीया। युगं चतुर्थी। भूतं पञ्चमी। षट् षष्ठी। मुनिः सप्तमी। वसुरष्टमी। रन्ध्रं नवमी। रुद्र एकादशी। एवं च वचनार्थः। युग्माग्न्योर्युगभूतयोः षण्मुन्योर्वसुरंध्रयोस्तिथ्योर्युग्मम्। तथा रुद्रेण युक्ता सहिता द्वादशी रुद्रश्च द्वादशी चेत्यर्थः। एवमग्रेऽपि। चतुर्दशी पूर्णिमा च प्रतिपच्चामावास्या च अनयोरनयोश्च तिथ्योर्युग्मं कृतं पूर्वा तिथिरुत्तरविद्धा कृता उत्तरा च पूर्वविद्धा कृता तत्तत्कर्मणीत्यर्थः। महाफलं तत्तत्तिथ्याधिकरणकतत्तत्कर्मविधिशिरस्कफलदायीति स्तुत्युन्नीतो विधिर्युग्मगता पूर्वा तिथिरुत्तरविद्धा उदयव्यापिनीग्राह्या उत्तरा तिथिः पूर्वविद्धा अस्तमयव्यापिनीग्राह्या ति। एतद्युग्मं व्यस्तं विपर्यस्तमन्यथाभूतं कृतम्, एतद्युग्मगताः पूर्वास्तिथयस्तत्पूर्वतिथिभिरुत्तराश्चोत्तरतिथिभिर्युग्मीकृता इत्यर्थः। महादोषं कर्मवैगुण्यापादकं पुराकृतं च पुण्यं हन्तीति निन्दा। न हि निन्दान्यायेन पूर्वविधेः स्तुतिः। न तु निन्दया स्वतन्त्रनिषेधोन्नयनम्। अर्धविनिर्गतां खण्डां तिथिं नक्षत्रं च दृष्ट्वा

तदधिकरणकमुपवासादिकर्म विदुषा कथं कार्यमिति प्रश्नान्न्यायाच्च खण्डतिथेः पूर्वदिनगताया उत्तरदिनगताया वा अनियमेन ग्राह्यत्वे प्रसक्ते कासांचिदुत्तरदिनगतानां कासांचिच्च पूर्वदिनगतानां तस्मिन्नियमिते वैपरीत्यस्याप्रसक्तेः । एतत्सम्वादीन्येव किंचित्तिथि-विषयाण्यन्यान्यपि युग्मवाक्यानि ।

"षष्ठ्यष्टम्यमावास्या कृष्णपक्षे त्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः" इति ।
"एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः" इति ।
षष्ठी च सप्तमी तात ते अन्योन्यं समाश्रिते" ॥

इति चेत्येवमादीनि । तथैतद्विरुद्धान्यपि—

"प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युते" ति ।
"चतुर्थीसंयुता या च सा तृतीया फलप्रदा"
"चतुर्थी च तृतीयायां महापुण्यफलप्रदे" ति ॥

चेत्येवमादीनि । तथा खर्वदर्पवाक्यमपि सर्वसाधारण्येन निर्णायकम्—

"खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।
खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी" ति ॥

खर्वः साम्यं दर्पो वृद्धिः । हिंसा क्षयः । एते च क्षयादयो यदि ग्राह्यतिथेस्तदा पूर्वतिथ्यपेक्षया । ग्राह्यतिथ्यपेक्षया तदुत्तरतिथेर्वा । एतच्चाग्रे स्पष्टनीयम् । तथा तत्तत्तिथिगोचराः सामान्येन तत्तदुप-वासादिकर्मविशेषविषयत्वेन च पूर्वोत्तरविद्धा विधिनिषेधा बहवः । तत्कथं कर्मकालव्याप्त्यैव खण्डानिर्णय इति ।

अत्रोच्यते । सर्वाणि युग्मखर्वादिशुक्लादिशास्त्राणि तत्तत्कर्म-विशेषेषु तत्तत्तिथ्यादिरूपे काले विहिते तस्मिन्खण्डे संदेहे निर्णयार्थं

प्रवर्त्तन्ते। यदा च तिथ्यादिविधयः प्रवर्त्तन्ते, तदैव प्रातराद्यहर्भाग-विधयोऽपि। तेन तेषां प्रथमावगतत्वात्तत्तत्कालीनतत्तत्तिथिलाभे संदेहाभावाच्च यत्र कर्मकालानुरोधेन निर्णयः कर्तुं न शक्यते तत्रैव विषये संदेहादितरशास्त्राणि निर्णायकानीत्युत्सर्गः। तथा हि त्रिमुहूर्त्तानां ततो न्यूनानां वा कर्मकालानां व्याप्तौ पञ्च पक्षाः संभवन्ति। पूर्वेद्युरेव साकल्येनैकदेशेन वा सा, परेद्युरेव सा, उभयेद्युः कार्त्स्न्येन सा, उभयेद्युरेकदेशेऽपि न सा, उभयेद्युरेकदेशेनैव सेति। अन्त्यापि द्विविधा। साम्येन वैषम्येण चेति। तत्र या तावदेकस्मिन्नेव दिने कार्त्स्न्येनैकदेशेन वा कर्मकालव्यापिनी "सा न्यायात्कर्मणः" इति प्रागुदाहृतवचनाच्च सैव ग्राह्या। क्वचिद् गौरीतृतीयादावेतस्यापि बलवता वचनेनापवादो लक्ष्यते। अनेनैव न्यायेन यदा तिथि-रेकस्मिन्दिनेऽहोरात्रयोगिनी अपरस्मिंश्च अहर्मात्रयोगिनी रात्रिमात्र-योगिनी वा तदोपवासादावहोरात्रसाध्ये उभययोगिन्येव ग्राह्या। नान्यतरमात्रयोगिनी कर्मकालव्यापित्वात्।

"दिवा रात्रौ व्रतं यच्च एकमेकतिथौ गतम्।
तस्यामुभययोगिन्यामाचरेत्तद् व्रतं व्रती"॥

इति विशेषवचनाच्च।

उत्तरस्यामुभययोगिन्यां 'त्रिसंध्यव्यापिनी' त्यस्याप्युपोद्बल-कत्वाच्च। अस्याप्यपवाद एकादश्युपवासादौ भविष्यति। वैषम्येण कर्मकालैकदेशव्याप्तावप्यधिकैकदेशयोगिनी ग्राह्या। साम्येन तु तस्यां यत्कर्म मध्याह्नादावेवोपक्रम्य समाप्यते तत्र प्रधानोपक्रमकालरूपैक-देशयोगिनी ग्राह्या।

"यो यस्य विहितः कालः कर्मणस्तदुपक्रमे।
तिथिर्याभिमता सा तु कार्या नोपक्रमोज्झिता"—

इति बौधायनवचनात्।

दिनद्वयेऽपि कर्मकालव्याप्तौ तदस्पर्शे वा पूर्वमेवोपक्रम्य मध्याह्नादावनुष्ठीयमाने कर्मणि साम्येन तदेकदेशस्पर्शेऽपि युग्मवाक्यात् खर्वादिवाक्याद्वा निर्णयः। तत्र कर्मकालशास्त्रेण निर्णयाशक्तेः। अत एव तत्रैवोक्तं "ह्रासवृद्धी न कारण" मिति। तयोश्च दैवपित्र्यभेदेन व्यवस्थितं निर्णायकत्वम्।

"द्वितीयादिकयुग्मानां पूज्यता नियमादिषु।
एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना"॥

इति व्यासनिगमवचनात्।

अत्र व्रतवाचिनियमपदात्परेणादिशब्देन सकलदैवकर्मणामुपादानम्। सादृश्यात्। 'एकोद्दिष्टादी' त्यादिशब्देन प्राचीनावीतित्वादिधर्मवतां पित्र्याणां पार्वणादीनाम्। वृद्ध्यादिशब्देन वा तद्गुणसंविज्ञानबहुव्रीहिणा वृद्धिः पुत्रजन्मादिनान्दीमुखश्राद्धनिमित्तं तल्लक्षितं तच्छ्राद्धमादिः प्रकृतिर्यस्येति व्युत्पन्नेन वा यज्ञोपवीतित्वादिदैवधर्मवतां दैवश्राद्धादीनां पित्र्याणाम्। मुख्यवृद्धिश्राद्धस्य तिथिप्रयुक्तत्वाभावेन तत्र तन्निर्णयकानुपयोगात्। हेमाद्र्यादिग्रन्थेषु माङ्गलिकामाङ्गलिकपदाभ्यामिदमेव विवक्षितम्। ह्रासवृद्धी तिथेः। आदिशब्देन तत्साम्यम्। तच्चोदना तत्प्रयुक्तो निर्णयस्तत्प्रतिपादकं खर्वादिवाक्यं वेत्यर्थः। अत्राचार्यचूडामणिना ह्रासवृद्ध्यादिशब्दस्य चन्द्रह्रासवृद्ध्युपलक्षितकृष्णशुक्लपक्षपरत्वात्

"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः"॥

इति वचनाभ्यां शुक्लगता तिथिरुत्तरा कृष्णपक्षगता पूर्वेति पक्षद्वयप्रयुक्तो यो निर्णयः क्रियते। स एकोद्दिष्टादिमाध्याह्निकवृद्ध्यादि-

पौर्वाह्णिकपित्र्यविषयः इत्येतस्य वचनस्यार्थः। आपराह्णिके तु पार्वणादिपित्र्ये अस्तमयव्यापिन्येव। पक्षद्वयेऽपि—

"ययास्तं सविता याति पितरस्तामुपासते।
तिथिं तेभ्योऽपराह्णो हि स्वयं दत्तः स्वयंभुवा" ॥

इति विशेषवचनात्।

आपराह्णिकविषयत्वं चास्य हेतुवन्निगदरूपवाक्यशेषात्। यद्यपि च शुक्लकृष्णपक्षप्रयुक्तो निर्णयो दैवकर्मविषयोऽपि भवत्येव। तथापि तत्र युग्मवचनादेव प्रायो निर्णयः। तदविषयभूतास्वेव तु कासुचित्तिथिषु तस्यावकाशः। पित्र्येषु त्वापराह्णिकेतरेषु कालव्याप्तिशास्त्रेणानिर्णये शुक्लकृष्णपक्षप्रयुक्त एव निर्णय इत्यस्य तदविषत्वमुच्यत इत्युक्तम्। तिथितत्त्वेऽप्येवमेव। एकोद्दिष्टादिवृद्ध्यादावित्यस्य त्वित्थं व्याख्यानमधिकम्। एकोद्दिष्टादिशब्देन तन्निमित्तभूततिथिविशेषाणां ग्रहणम्। आदिशब्देन पार्वणस्यापि। वृद्ध्यादावित्यादिशब्देन क्षयस्तम्भितयोः। ह्रासवृद्ध्यादीत्यादिशब्देन ययास्तमिति चोदनायाः। ततश्चायमर्थः। एकोद्दिष्टादिनिमित्तभूततिथेर्वृद्धिक्षयसाम्येषु तत्प्रयुक्ते संशये आपराह्णिकेतरपितृकृत्ये चन्द्रवृद्धिह्रासोपलक्षितशुक्लकृष्णपक्षचोदना नियामिका। आपराह्णिके तु तत्र 'ययास्तमि'ति चोदनेति। तिथिविवेकेऽप्येवम्। खर्वदर्पवाक्यं त्वितरैर्नोद्भावितमेव। आचार्यचूडामणिना तु दर्शे श्राद्धविषयं व्याख्यातम्।

"यदा चतुर्दशी यामं तुरीयमनुपूरयेत्।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते" ॥

इत्यादिपरिशिष्टवचनैकवाक्यत्वात्। अत एव "दृष्टोपवासः कर्तव्यः कथं शङ्कर जायते" ति विष्णुधर्मोत्तरेऽप्युपक्रमे उपवासग्रहणं

न दैवकर्मणामेवोपलक्षणम् । किन्त्वापराह्णिकेतरपित्र्याणामपि । "यां तिथिं समनुप्राप्ये" ति देवलवचनद्वये त्वादिपदेन सादृश्याद्दैवकर्मणामेव ग्रहणम् । पित्र्यव्यावृत्त्यैव तस्य सार्थकत्वात् । तेन दैवकर्मविषयस्य युग्मवाक्यस्यैव तदुपोद्बलकमिति । एवं 'ह्रासवृद्धी न कारण'—मित्यत्रापि ह्रासवृद्धिशब्दाभ्यां शुक्लकृष्णपक्षयोरेवोपादानमिति । अत्र ब्रूमः । निगमवचनस्य लक्षणां विना पूर्वार्धोपस्थिततिथिगतह्रास-वृद्धिविषयखर्वादिवाक्यव्यवस्थापकत्वे संभवति सति, अत्यन्तानुप-स्थितचन्द्रवृद्धिह्रासाङ्गीकारेण लक्षणया च शुक्लकृष्णपक्षशास्त्रविषयत्वं तावदत्यन्तायुक्तम् ।

किंच तद्विषयत्वे व्यवस्थाप्यशक्या । तथा हि—पूर्वार्द्धे तावन्नेदृशी व्यवस्था क्रियते । दैवेषु युग्मवचनमेव निर्णायकमिति । युग्मवचना-विषयतिथिषु विरुद्धयुग्मवचनविषयतिथिषु च दैवकर्मस्वपि शुक्ल-कृष्णवाक्यस्य सर्वैरपि नियामकत्वस्याभ्युपगतत्वाद्युक्तत्वाच्च । तस्मादीदृशी तत्र व्यवस्था । युग्मवचनानि नियमादिविषयाण्येवेति । तथा चोत्तरार्द्धेऽपि शुक्लकृष्णवाक्यं पित्र्यविषयमेवेत्येवं व्यवस्था वक्तव्या । न च सा युक्ता । तस्या दैवेष्वपि व्यवस्थापकत्वाभ्युपगमात् । पौर्वाह्णिकानां च दैवामादिश्राद्धानां वृद्ध्यादावित्यनेनैव ग्रहणादेको-द्दिष्टातिरिक्तस्य च माध्याह्निकश्राद्धस्याभावादेकोद्दिष्टादीत्यादिशब्द-संग्राह्यमपि न लभ्यते । पार्वणसंग्रहानङ्गीकारात् । यत्तु तिथितत्त्वे एकोद्दिष्टादिवृद्ध्यादावित्यस्य व्याख्यानम् । तदत्यन्तायुक्तम् ।

तथा हि । संदेहप्रतिपादनमेव तावन्नोपयुज्यते । सर्वतिथिनिर्णय-वाक्यानां संदेह एव प्रवृत्तेः । किं तदुत्थापनाय वृद्ध्यादिप्रतिपादनेन । संदेहोत्थापकतापि वृद्ध्यादीनां नैकान्तिकी । अष्टपञ्चाशत्षष्टि-द्वाषष्ट्यन्यतरनाडीमितत्वे तिथेः । सत्यपि क्षयादौ संदेहाभावात् । किं तु तिथिखण्डत्वस्यैव सा । नान्तरीयकं तु तदा क्षयवृद्ध्यादिकम् । लक्षणा च एकोद्दिष्टादिशब्देन तदङ्गतिथेर्निर्हेतुकी ।

किं च—शुक्लकृष्णवाक्ययोः पित्र्यविषयत्वमयुक्तमेव। तथा हि। वचनान्तरैरव्यवस्थया प्राप्तयोः पूर्वोत्तरतिथ्योर्व्यवस्थामात्रमेव ताभ्यां क्रियते। लाघवात्। दशम्यादाविव। न च कुत्रापि पित्र्येऽव्यवस्थया पूर्वोत्तरतिथ्योः प्राप्तिः। येन तत्रानयोरवकाशः स्यात्। एकैकदिने कर्मकालव्याप्तौ तयैव वैषम्येणैकदेशस्पर्शे आधिक्येन तस्मिन् खर्वादिना तदनङ्गीकारे उभयत्र तद्व्याप्तौ तदस्पर्शे वा अस्त-मयापराह्णव्याप्तिभ्यां पार्वणैकोद्दिष्टयोर्व्यवस्थासिद्धेः। न चास्त-मयादिवाक्यानि आपराह्णिकपित्र्यविषयाण्येव। न तु तदितरपित्र्य—विषयाणीति युक्तम्।

"देवकार्ये तिथिर्ज्ञेया यस्यामभ्युदितो रविः।
पितृकार्ये तिथिर्ज्ञेया यस्यामस्तमितो रविः" ॥
"उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ।
द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः" ॥

इत्यादिवचनानां सामान्यविषयत्वात्। "ययास्तं सविता याती" त्यादेरपि सत्यप्यपराह्णसमभिव्याहारे "पूर्वाह्णे दैविकं कार्य-मपराह्णे तु पैतृकम्" तथा "श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते" इत्यादिवाक्यपर्यालोचनया द्वेधाविभक्तदिनापराह्णविषयत्वात्तस्यैको-द्दिष्टविषयत्वेऽपि तदुपपत्तेः सर्वपित्र्यविषयत्वमेव। एकोद्दिष्टस्यापि कुतपपूर्वार्धे उपक्रमेऽपि तादृशापराह्ण एव समाप्यमानत्वात्। उप-क्रमस्य च शुक्लपक्षे पार्वणसम्बन्धिनोऽपि कुतपपूर्वार्द्धरूपपूर्वाह्ण-गतत्वात्।

"शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः।
कृष्णपक्षे पराह्णे तु रौहिणं तु न लङ्घयेत्" ॥

इति वचनात्।

न च "रौहिणं तु न लङ्घये" दित्येतत्समभिव्याहारादारभ्य

'कुतपे श्राद्धं कुर्यादारौहिणाद्बुध' इतिवदेकोद्दिष्टविषयमेवेदमिति वाच्यम् । अत्रोपक्रमे रौहिणलङ्घननिषेधात् । पूर्वार्द्धे उपक्रमस्यैव कालाख्यानात् । तस्मात् पित्र्येषु सर्वत्रान्यत एव व्यवस्थासिद्धेर्व्यवस्थापकान्तरानपेक्षणाद्दैवेष्वेव व्यवस्थापकं शुक्लकृष्णवाक्यम् । तत्र हि युग्मवचनाविषयतिथिषु उभयत्र कर्मकालव्याप्त्यादौ विरुद्धयुग्मवचनविषयतिथिषु चाऽस्ति व्यवस्थापकापेक्षा ।

एवं सति विष्णुधर्मोत्तरवचनोपक्रमगतमुपवासग्रहणमपि सादृश्याद्दैवकर्मणामेवोपलक्षणम् । न पित्र्याणाम् । तस्मात् "एकोद्दिष्टादी" त्यस्य कुसृष्ट्या खर्वादिवाक्यानां च सर्वतिथिविषयाणां दर्शमात्रविषयतयाऽतिसंकोचेन व्याख्यानमयुक्तमेवेति पूर्वोक्तमेव "द्वितीयादिकयुग्माना" मित्यस्य दैवपित्र्यकर्मविषयत्वेन युग्मखर्वादिवाक्यव्यवस्थाप्रतिपादकतया व्याख्यानं युक्तम् । युग्मवचनानां मिथो विरोधे शुक्लकृष्णवाक्याद्व्यवस्था । क्वचित्कर्मविशेषेणापि । तच्चाग्रे व्यक्तीभविष्यति । एवं सति यद्विष्णुधर्मोत्तरे आद्यवाक्याभ्यां उदयास्तमयान्यतरगतत्वेनाहोरात्रसाध्येष्वप्युपवासादिकर्मसु तिथेर्ग्राह्यत्वमुक्तम् । तदेवोत्तरवचनेन शुक्लकृष्णविषयतया व्यवस्थाप्यते । देवलवचनाभ्यां यदुदयास्तमयगततिथेः साकल्यप्रतिपादनं तत्प्रमाणान्तरेण पूर्वस्या उत्तरस्या वा तिथेर्ग्राह्यत्वे सिद्धे तदहर्भागे तिथेरभावेऽपि तत्रैव तत्तत्कर्मानुष्ठानार्थमुपोद्बलकं च । यच्चेदं सूर्योदयादूर्द्ध्वमस्तमयात्पूर्वं वा वर्त्तमानायास्तिथेः शुक्लकृष्णवाक्याद्युग्मवाक्यात् खर्वादिवचनाद्वा ग्राह्यत्वं साकल्यज्ञानं च तत्तत्र त्रिमुहूर्त्तावरसत्त्वे न तु न्यूनसत्त्वे ।

"उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ ।
द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः" ॥

इति विष्णुधर्मोत्तरवचनात् ।

भानावुदिते सति यद्द्विमुहूर्त्तं मुहूर्त्तद्वयं तद् दैवतं दैवकर्म-योग्यम्। एवं रवावस्तमिते अस्तं गन्तुमारब्धे अस्तमयात्पूर्वं यदह्नः सम्बन्धि त्रिमुहूर्त्तं मुहूर्त्तत्रयं तत्पित्र्यकर्मयोग्यम्। तस्मात्तद्वर्त्तिनी तिथिर्हव्यकव्ययोर्ग्राह्येत्यर्थः। अह्न इति वचनादादि-कर्मण्यस्तमित इति क्तः। अत्र यद्यप्युदये द्विमुहूर्त्तसत्ताप्युक्ता। तथापि साऽनुकल्पः।

"त्रिमुहूर्त्ता न कर्त्तव्या या तिथिः क्षयगामिनी।
द्विमुहूर्त्तापि कर्त्तव्या या तिथिर्वृद्धिगामिनी"॥

इति दक्षवचने अपिशब्देन तद्द्योतनात्। त्रिमुहूर्त्तग्राह्यतानिषेधश्च क्षयगामिन्याम्। अन्यदा तद्ग्राह्यतायाः साधक एव। प्राप्तिपूर्व-कत्वात्प्रतिषेधस्य।

वस्तुतस्तु पूर्वार्द्धेऽप्यपिशब्दान्वयात्तस्य प्रतिषेधे न तात्पर्यम्। किन्तु उत्तरार्धगतानुकल्पविधावेव। "पौर्वाह्णिकास्तु तिथयो दैवे कार्या प्रयत्नतः" इति वृद्धयाज्ञवल्क्यवचनाच्च त्रिमुहूर्त्तसत्त्वम्। पूर्वाह्णशब्दोऽह्ययमह्नः पूर्वो भाग इति योगेन पञ्चधाविभक्तदिनाद्यभाग-वचनः। "प्रातः संकल्पयेद्विद्वानुपवासव्रतादिक"मिति च त्रिमुहूर्त्ता-त्मकस्य प्रातःकालस्य कर्मोपक्रमरूपसंकल्पकालत्वात्।

"यो यस्य विहितः कालः कर्मणस्तदुपक्रमे।
विद्यमाना भवेदङ्गं नोज्झितोपक्रमेण तु" इति—

चोपक्रमकालीनतिथेर्ग्राह्यत्वाभिधानादप्युदये त्रिमुहूर्त्तसत्त्व-मावश्यकम्। द्विमुहूर्त्तसत्त्वं नुकल्पो दानस्नानादिविषयः। अस्त-मयात्पूर्वं तु त्रिमुहूर्त्तसत्त्वमेवापेक्षितम्।

"यां प्राप्यास्तमुपैत्यर्कः सा चेत्स्यात्त्रिमुहूर्त्तगा।
धर्मकृत्येषु सर्वेषु सम्पूर्णां तां विदुर्बुधाः"॥

इति शिवरहस्यादिवचनात्।

एवं वेधिकाया अपि पूर्वोत्तरतिथ्योर्दिने त्रिमुहूर्त्तावरसत्त्वमपेक्षितम्।

"पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम्।
त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः"

इति पैठीनसिवचनात्।

एकादश्यां विशेषो वक्ष्यते। एवं सर्वत्र दिवावेध एवोत्सर्गतः स्थिते जन्माष्टमीशिवरात्र्यादौ रात्रियोगेऽपि वेधव्यवहारो वैशेषिकः। यानि तु—

"व्रतोपवासस्नानादौ घटिकैका यदा भवेत्।
आदित्योदयवेलायां या स्तोकापि तिथिर्भवेत्"

इत्यादीनि मुहूर्त्तत्रयन्यूनाया अपि सम्पूर्णत्वप्रतिपादकानि वचनानि तानि कैमुतिकन्यायेन त्रिमुहूर्त्तसत्त्वप्रशंसापराण्येव। इदं च साकल्यवचनात्तत्तत्काल एव तिथ्यभावेऽपि कर्मानुष्ठानं मन्वाद्यादिकर्तव्यस्नानश्राद्धादिव्यतिरिक्तविषयम्। तेषां तु तत्कालावर्त्तिन्यामपि तिथौ निर्णयेन प्राप्तानां तत्तिथिमध्य एवानुष्ठानम्। न तत्तत्कालप्रतीक्षया।

"अभ्यङ्गे चोदधिस्नाने दन्तधावनमैथुने।
जाते च मरणे चैव तत्कालव्यापिनी तिथिः॥
मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्ययोः।
व्यतीपाते वैधृतौ च तत्कालव्यापिनी क्रिया"

इति स्कन्दपुराणात्।

ये त्वेकैकतिथिविषयाः सामान्येन कर्मविशेषपुरस्कारेण च विधिप्रतिषेधास्ते तिथिविशेषनिर्णये उद्भाव्य व्यवस्थापयिष्यन्ते।

यश्चायं युग्मवाक्याद्दैवकर्मविषयो निर्णयः । स यान्येकभक्तनक्तादीनि त्रिमुहूर्त्तेन ततो न्यूनेन वा कालेन शास्त्रतः साध्यानि तेषु कालव्याप्ति-निर्णयाविषयेषु पक्षेषु कर्त्तव्यः इत्युक्तम् । उपवासे तु शुद्धत्रिमुहूर्त्त-न्यूनाधिकायामिव शुद्धत्रिमुहूर्ताधिकायामपि सत्यप्युत्तरस्यायुग्मत्वे कालव्याप्तिवशात्पूर्वैव । यापि पूर्वतिथ्या विद्धाप्युत्तरदिने नास्त्येव, त्रिमुहूर्त्तन्यूना वास्ति, साप्ययुग्मापि पूर्वैव, द्वितीयपक्षेऽपि युग्म-वचनोदयवचनाप्रवृत्तेः । उभयत्रापि त्रिमुहूर्त्तसत्त्वावश्यकत्वस्योक्त-त्वात् । "प्रायः प्रान्त उपोष्या हि तिथिर्दैवफलेप्सुभिः" इत्यस्य च प्रायः पदेनैवानित्यत्वद्योतनात् ।

ननु—

"द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी" ॥

इत्यादिवचनैर्या पूर्वतिथिविद्धोत्तरा निषिद्धा, सा त्रिमुहूर्त्त-न्यूनयापि पूर्वतिथ्या युक्ता यद्युत्तरदिने किञ्चिल्लभ्यते तदा पूर्वां विहायोत्तरैवोपोष्या भवति ।

"घटिकार्द्धं त्रिभागं वा स्वल्पं वा दूषयेत्तिथिम् ।
पञ्चगव्यघटं पूर्णं सुराया बिन्दुको यथा" ॥

इतिषट्त्रिंशन्मतवचनात् ।

"सर्वप्रकारवेधोऽयमुपवासस्य दूषक" इति निगमवचनाच्चोप-वासे दूषकतिथियोगस्यालपस्यापि त्याज्यत्वप्रतीतेः ।

"उदये तूपवासस्य नक्तस्यास्तमये तिथिः ।
व्रतोपवासनियमे घटिकैका यदा भवेत् ॥
उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके" ।

तथा

"आदित्योदयवेलायां याल्पापि च तिथिर्भवेत्।
पूर्णा इत्येव मन्तव्या प्रभूता नोदयं विना"॥

इत्यादिभिरल्पाया अपि परदिनगताया ग्राह्यत्वप्रतीतेश्चेति हेमाद्रिः।

अत्रोच्यते। न तावत् "घटिकार्द्धं त्रिभागं च" इति वचनं सर्वोपोष्यतिथिविषयम्। सामान्यविषयेण युग्मवचनेन "उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुता" इत्यादि विशेषवचनेन च पूर्वयुक्तानामपि कासांचिदुपोष्यत्वात्। अत एव "प्रायः प्रान्त" इति प्रायोग्रहणम्। नापि याः पूर्वतिथियुक्ता अनुपोष्यत्वेनोक्तास्तद्विषयम्। 'हन्युः पूर्वोत्तरे तिथी' इत्यादि हि तदर्थप्रतिपादकं वचनम्। तद्यथोत्तरतिथेरस्तमयवर्त्तिन्यास्त्रिमुहूर्त्ताया एव पूर्वतिथिदूषकत्वं वदति। तथा तस्या एवोदयवर्त्तिन्यास्तादृश्या एवोत्तरतिथिदूषकत्वम्। अन्यथा वैरूप्यापत्तेः। तथैतद् "व्यस्तं महादोष" मिति निन्दा च सकलदैवसाधारणी उपवासे। अल्पयोगेऽपि इतरेषु त्रिमुहूर्त्तयोग एव प्रवर्त्तमाना विरूपा स्यात्। न च घटिकार्धादिवचनान्यगतिकानि। येन तदपि सह्येत। तेषां निन्दातिशयपरत्वेनोपपत्तेः। वस्तुतस्तु तानि सर्वाण्येकादशीविषयाण्येव। वेधातिवेधादिवचनवत्। एकमूलकल्पनालाघवात्। यान्यपि घटिकादिमात्राया अप्युपवासे ग्राह्यत्वप्रतिपादकानि। तान्यप्यपिशब्दवाशब्दादियोगात्कैमुत्यन्यायेन त्रिमुहूर्त्तप्रशंसापराण्येव। एवं च "प्रायः प्रान्तः उपोष्या ही" त्यपिवचनमेकादशीमात्रविषयमेव। प्रायो ग्रहणं च क्वचिद्विद्धाया अपि ग्राह्यत्वात्।

यत्तु—

"अविद्धानि निषिद्धैश्चेन्न लभ्यन्ते दिनानि तु।
मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्या वैकादशी तिथिः॥
तदर्द्धविद्धान्यन्यानि दिनान्युपवसेन्नरः।
अविद्धानामलाभे तु पयोदधिफलानि वा॥

सकृदेवाल्पमश्नीयादुपवासस्ततो भवेत्”

इत्यृश्यशृङ्गवचनम्, तदपि निषिद्धैरविद्धान्युत्तरदिने त्रिमुहूर्त्तानि ततोऽधिकानि वा न लभ्यन्त इत्येवं व्याख्येयम्। त्रिमुहूर्त्तन्यूनलाभस्याकिंचित्करत्वात्। त्रिमुहूर्त्तसत्त्वे एव युग्मवचनस्य तदनुग्राहकस्य चोदयसाकल्यवचनस्य प्रवृत्तेः। एकादशी त्वल्पापि परदिनगता ग्राह्येति वक्ष्यते। दशमीमुहूर्त्तपञ्चकवेधवत्याश्च तस्याः परदिने वर्त्तमानत्वे आवश्यकेऽपि तादृशवेधवत्या ग्राह्यत्वम्। तत्परदिने द्वादश्यभावे गृहिणः प्रति। तदभावश्चैव तिथिक्रमे संभाव्यते। दशघटिका दशमी, चतुर्घटिका एकादशी, तदुत्तरं तस्मिन्नेव दिने चतुःपञ्चाशद्घटिका द्वादशीति।

यदा त्वन्त्यभागगताया एवैकादश्या उपोष्यत्वात्तादृश्या अप्युत्तरस्या एवोपोष्यत्वमिति हेमाद्र्यादिसंमतः पक्षः। तदा अरुणोदयमारभ्य मुहूर्त्तपञ्चकं दशम्या द्रष्टव्यम्। तदा हि सूर्योदयोत्तरं त्रिमुहूर्त्तदशमीविद्धाया अपि ग्राह्यत्वम्। त्रिमुहूर्त्तक्षयेणोत्तरदिने तदभावे तदुत्तरदिने च द्वादश्यभावे सर्वेषां मते नास्त्येव।

अन्यतिथिविषयः सार्धमुहूर्त्तद्वयवेधस्तु सूर्योदयमारभ्यैव। अरुणोदयवेधस्यैकादशीमात्रविषयत्वात्। तदधिकवेधवत्या अपि च परदिने सर्वथा सत्त्वे त्रिमुहूर्त्तन्यूनसत्त्वे वा अन्यतिथेरुपोष्यत्वेऽपि “अविद्धानामलाभे तु” इति, विशेषं तस्यां विधातुं स्वाभाविकशुद्धोपवासाभिप्रायेण सार्द्धमुहूर्त्तद्वयवेधवत्यास्तस्या ग्राह्यत्वाभिधानम्। “मुहूर्त्तशब्दो घटिकाभिप्राय” इति गौडाः। तस्माद्या त्रिमुहूर्त्तन्यूनया त्रिमुहूर्त्तयापि वा निषिद्धया पूर्वया तिथ्या युक्तोत्तरदिने त्रिमुहूर्त्तन्यूनास्ति सा पूर्वैवोपोष्या युक्तेति।

हेमाद्र्यादयस्तु केचिदल्पाया अपि पूर्वतिथेर्दूषकत्ववचनान्युत्तरस्याश्च तादृश्या अपि ग्राह्यत्ववचनानि च यथा श्रुतान्येव

गृहीत्वा तथैवोपवासे निर्णयं मन्यन्ते ।

या तु त्रिमुहूर्त्तया पूर्वतिथ्या विद्धा सत्युत्तरदिने त्रिमुहूर्त्ता ततोऽधिका वा सोत्तरया युग्मत्वे सत्युत्तरैवाहर्मात्रस्पर्शिन्यपि पूर्वस्या अहोरात्रोभयस्पर्शित्वे । युग्मत्वेनोपक्रमकालगतत्वेन च तस्या एव प्राबल्यात् । "प्रातः संकल्पयेद्विद्वानुपवासव्रतादिक,, मित्युक्तत्वात् । उपवासे चोत्पत्तिफलविधिषु पर्युदासलक्षणया प्रजापतिव्रतवत्संकल्पस्यैव विधेयत्वेन प्राधान्यात् । अग्रे तत्परिपालनमात्रकरणात् । "सा तिथिर्हव्यकव्ययोः" "सा तिथिः सकला ज्ञेया यस्यामुदयते रवि, रित्यादीनि वचनानि यदा मध्याह्नादिमात्रानुष्ठेयप्रधानैकभक्तादि तिथेस्तत्कालास्पर्शिन्या अपि तस्मिन्नेव कालेऽनुष्ठानं तत्प्रत्यङ्गत्वयोग्यत्वरूपमौपचारिकं सङ्कल्पं प्रतिपादयन्ति । तदा स्वरूपतः प्रातः कालमात्रसाध्यं विषयतः केवलमहोरात्रसाध्यं संकल्पमात्ररूपमुपवासं प्रति सुतरां तत्कालवर्तिन्यास्तस्याः । यत्वेतादृशे विषये विहितकाले प्रक्रान्तं कालान्तरेऽपि समाप्यत इति न्यायं मूलत्वेनोपन्यस्य तस्याभ्युदितेष्वधिकरणव्यवस्थापितत्वं वर्धमानेनोक्तं तद्भ्रान्त्या । तत्राकालेऽपि प्रक्रान्तस्य समाप्यत्वव्यवस्थापनात् । सान्तपनीयाधिकरणं तूपन्यसितव्यम् ।

वस्तुतस्तु न तस्याप्ययं विषयः । स्वकाल एवेह संकल्परूपप्रधानानुष्ठानात् । व्रतशब्दोऽपि नियमपर्यायः संकल्पवाचक एव । अत एव "विधिप्रतिषेधात्मकमानससंकल्परूपाणि स्नातकव्रतान्याह,, इत्यवतारयता विज्ञानेश्वरेण न केवलं नञुक्तेष्वेव विधिवाक्येष्वपि संकल्पलक्षणाभ्युपगता । न चातिप्रसङ्ग । अभियुक्तव्रतप्रसिद्धिविषय संकल्पविशेषस्यैव व्रतत्वात् । मन्त्रत्ववत् । "स्वकर्तव्यविषयो नियतः संकल्पो व्रतमिति श्रीदत्तः । तत्त्वग्निहोत्रसंध्यावन्दनादिविषये संकल्पेऽतिप्रसक्तम् । न च संकल्पस्य व्रतत्वे "व्रतं संकल्पयेत्"

इत्यनन्वय इति वाच्यम्। 'पाकं पचति, दानं दद्यात्, इतिवत्प्रत्ययानुग्रहार्थं प्रयोगोपपत्तेः।

या तु तादृशी पूर्वतिथ्या युग्मा सा पूर्वा। युग्मत्वादहोरात्रोभयस्पर्शित्वाच्च। उपवासस्य चाहोरात्राभोजनविषयसंकल्परूपस्य विषयांशेनाहोरात्रसाध्यत्वात्। अस्तमयवर्तिन्या अपि तिथेः साकल्यवचनाच्च। संकल्परूपोपक्रमणकालेऽपि सत्त्वात्। एकभक्तादितिथेर्मध्याह्नादाविव स्वरूपेण तत्रासत्या अपि "सा तिथिः सकला ज्ञेया यस्यामस्तमितो रवि, रिति वचनं च दैवकर्मविषयमपीत्युक्तम्। ईदृशविषय एव चोपोद्बलकं वृद्धयाज्ञवल्क्यवचनमपि।

"दिवा रात्रौ व्रतं यच्च एकमेकतिथौ गतम्।
तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रती" इति॥

संकल्पश्च "प्रातःकालवर्त्तमानतिथिमेव कर्मतिथियुक्तत्वरूपाधिकरणतयोल्लिख्यामुकातिथ्युपवासमहं करिष्य" इत्येवं कर्तव्यः। तत्कालवर्त्तितिथेः संकल्पाधिकरणत्वस्य तत्तिथियोगप्रयुक्तत्वात्। यत्त्वनेकदिनसाध्यं कर्म तत्राद्यप्रभृति करिष्य इति प्रसङ्गादत्रोक्तम्।

एवं च दिनद्वयेऽपि खण्डायां तिथेः स्वरूपेण प्रातर्मात्रसाध्येऽपि परिपाल्यत्वेनाहोरात्रसाध्ये उपवासे कर्मकालव्याप्तिशास्त्रेणान्यतरदिनगताया निर्णयस्य कर्तुमशक्यत्वाद्युग्मवाक्यादेव प्रायो निर्णय इत्युपवास एव युग्मशास्त्रस्य परभाग इत्याभिप्रेत्य कैश्चिदुपवासविषयता तस्योच्यते। वस्तुतस्त्वेकभक्तादिष्वपि कालव्याप्तिशास्त्रानिर्णेयेषु युग्मशास्त्रं निर्णायकं भवत्येवेत्युक्तम्। येषु "तूपोष्या,, इत्येव श्रूयते। तान्युपवासमात्रविषयाण्येव। उपवासोत्तरदिने च भोजनात्मकं पारणमवश्यं कर्तव्यम्।

"उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत्।
अन्यथा तु फलस्यार्द्धं धर्ममेवोपसर्पति"॥

इतिदेवलवचनेनोपवासाङ्गत्वेन तद्विधानात् ।

न च रागप्राप्तभोजनानुवादे पूर्वाह्णमात्रविधिरेवायमस्त्विति वाच्यम् । पारणशब्दस्य कर्मसमाप्तिवचनत्त्वाच्छास्त्रीयकर्मसमाप्तेश्च शास्त्रीयत्वावश्यंभावात् । उद्यापनादिवत् । "भोक्ष्येऽहं पुण्डरीकाक्षे" ति संकल्पविषयत्त्वात् । अप्प्राशनरूपप्रतिनिधिविधानाच्च । तन्नियमानङ्गत्वे तदनुपपत्तेः । तस्य च भोजनरूपता अभोजननियमात्मकस्योपवासस्य भोजनेनैव समाप्तेः "भोक्ष्येऽह" मिति संकल्पमंत्रलिङ्गात्, तत्रैव प्राचुर्येण प्रयोगाप्रयोगात्, तद्विषययोगरूढेरपि पारणशब्दे वक्तुं शक्यत्वाच्चावगम्यते । अत एव "तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पारण" मितिपारणान्तं व्रतं ज्ञेयमिति च व्रतशब्दः सामान्यवचनोऽप्युपवासविषय एव । तथा "चोपवासेषु सर्वेष्वि"त्युक्तम् ।

निगमे च—

"पूर्वविद्धासु तिथिषु भेषु च श्रवणं विना ।
उपोष्य विधिवत्कुर्यात्तत्तदन्ते च पारणम्" इति ॥

माधवस्तु—

"तिथीनामेव सर्वासामुपवासव्रतादिषु ।
तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्दशीम्" ॥

इति स्कन्दपुराणगतमादिशब्दमेकभक्तादिसंग्रहार्थत्वेन व्याख्याय "यां तिथिमुद्दिश्यैतानि पूर्वेद्यु विहितानि परेद्यु स्तत्तत्तिथ्यन्ते, पश्चाद्भोजनं कार्यमित्याह" ।

तच्च पारणं तद्दिने उपोष्यतिथ्यनुवृत्तौ यदि दिवा तिथ्यन्तप्रतीक्षया भोजनकालो लभ्यते तदा तिथ्यन्ते कर्तव्यम् ।

"तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् ।
अतोऽन्यथा पारणायां व्रतभङ्गमवाप्नुयात्" ॥

इतिस्कन्दपुराणात् ।

तिथिनक्षत्रेति तिथिभेति चेतरेतरयोगो विवक्षितः। अनुवाद्यगतत्वात् ।

"पूर्वविद्धासु तिथिषु भेषु च श्रवणं विना ।
उपोष्य विधिवत्कुर्यात्तत्तदन्ते च पारणम्" ॥

इति निगमवचने ।

"तिथीनामेवे" त्यादिस्कन्दपुराणवचने चासमासनिर्देशाच्च । तेन तिथिनियमे तिथ्यन्ते नक्षत्रनियमे नक्षत्रान्ते उभयनियमे उभायन्त इत्यर्थः । यदा तु दिवा तादृशः पारणकालो न लभ्यते तदा तिथ्यन्तो न प्रतीक्षणीयः । किन्तु दिवैव पारणं कर्तव्यम् ।

"सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते ।
अन्यथा पुण्यहानिः स्याद्दृते धारणपारणम्" ॥

इति ब्रह्मवैवर्त्तात् ।

धारणमाहारं विना । शरीरस्य उपवास इति यावत् । तदुत्तरदिने च पारणं चतुर्थकालभोजनविधिना विहितम् । तद्विहायेत्यर्थः । धारणं नक्तभोजननियमग्रहणमिति कश्चित् ।

"अन्यतिथ्यागमो रात्रौ तामसस्तैजसो दिवा ।
तामसे पारणं कुर्वंस्तामसीं गतिमश्नुते" ॥

इति गरुडपुराणे ।

"न रात्रौ पारणं कुर्याद्दृते वै रोहिणीव्रतात् ।
तत्र निश्यपि तत्कुर्याद्वर्जयित्वा महानिशाम्" ।

इति भविष्योत्तरे च रात्रिपारणानिषेधाच्च। महानिशा सार्धयामादुपरितनो यामः। "यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणम्" इति। माधवोदाहृतं तु वचनं तेनापि मूलालिखनाद् ग्रन्थान्तरासम्वादाच्च नादृतम्। एवं केवलतिथिनिमित्ते उपवासे। नक्षत्रादियुक्ततिथिनिमित्ते तु जन्माष्टमीप्रकरणे वक्ष्यते।

तदयमुपवासे सामान्यतिथिनिर्णयसंक्षेपः—

या शुद्धा त्रिमुहूर्त्तान्तमपि वृद्धा परेऽहनि।
युग्माप्युत्तरतिथ्या सैवोपोष्या केवला यथा॥
या पूर्वतिथिविद्धापि परेऽहनि न विद्यते।
न्यूना वा त्रिमुहूर्त्तेषु सापि पूर्वैव सम्मता॥
त्रिमुहूर्त्ताधिका वापि पूर्वविद्धोत्तरेऽह्नि या।
पूर्वया परया वा सा युग्मोपोष्येति निर्णयः॥
उपोष्यतिथ्यभावेऽपि सङ्कल्पः प्रातरेव च।
परेऽह्न्युपोष्यतिथ्यन्ते कालश्चेल्लभ्यते दिवा॥
पारणस्य तदान्ते स्यान्न चेत्पूर्वाह्ण एव तत्॥ इति॥

एवं सामान्यतिथिविषयसकलनिर्णयवाक्यैकवाक्यतयोपवासे एवं प्रकारे सकलतिथिनिर्णये सिद्धे प्रतिपदादितिथिषु अयमेवोपवासविषया निर्णयः क्रमेण योज्यते। क्वचित्कचिद्विशेषश्चोच्यते।

## अथ प्रतिपद्विवेचनम्।

तत्र प्रतिपदुपवासे शुक्ला कृष्णा वा पूर्वैव ग्राह्या।
"प्रतिपत्पञ्चमी चैव उपोष्या पूर्वसंयुता"॥

इति जाबालिवचनात्।

"सप्तमी पञ्चमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिः" ॥

इति पैठीनसिवचनाच्च ।

"प्रतिपत्पञ्चमी भूता सावित्रीवटपूर्णिमा ।
नवमी दशमी चैव नोपोष्याः परसंयुताः" ॥

इति ब्रह्मवैवर्त्ते ।

"द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पुर्वोत्तरे तिथी ॥
उपवासे सप्तमी तु वेधाद्धन्त्युत्तरं दिन" मिति ।

वृद्धवशिष्ठवाक्ये चोपवासे उत्तरविद्धाया निषेधाच्च । यद्यपि च सूर्यास्तपूर्वभावित्रिमुहूर्त्तात्मकसायाह्नमात्रव्याप्तापि पूर्वविद्धा भवति । तथापि तत्पूर्वत्रिमुहूर्त्तात्मकापराह्णेऽपि यदि वर्त्तते तदैव पूर्वा ग्राह्या । अन्यथोत्तरैव ।

"संमुखी नाम सायाह्नव्यापिनी दृश्यते यदा ।
प्रतिपत्संमुखी कार्या या भवेदापराह्णिकी" ॥ इति ।

स्कन्दपुराणे विशेषाभिधानात् । इदं हि वचनं प्राप्ते पूर्वविद्धत्वाख्ये सांमुख्ये विशेषमात्रविधायकम् । प्रातःकालिकप्रधानाङ्गनिर्वापे प्राप्ते प्रातःकालसामान्ये "पुरा वाचः प्रवदितोर्निर्वपे" दिति तद्विशेषविधिवत् । न त्वापराह्णिक्याः सांमुख्यविधायकम् । गौरवात् । तच्च यथा दैवान्तरेष्वपि युग्माग्निवचनात्प्राप्ते शुक्लप्रतिपदः पूर्वविद्धाया ग्राह्यत्वे अपराह्णिकत्वं विशेषं विदधाति । तथोपवासेऽपि । पूर्वविद्धाप्राप्तविशेषात् । यच्चापराह्णिकवचनस्यानाकरत्वमभिधाय तत्रापि साकरत्वेऽपि आपराह्णिकपित्र्यविषयत्वं गौडैरुक्तम् । तद्विशेषवचनस्यानर्थक्यापत्तेः ।

"प्रतिपत्सैव विज्ञेया या भवेदापराह्णिकी ।
दैवं कर्म तया ज्ञेयं पित्र्यं च मनुरब्रवीत्" इति—

माधवोदाहृतव्यासवचनविरोधाच्चायुक्तम् ।

"प्रतिपत्सद्वितीया स्याद् द्वितीया प्रतिपद्युते" त्यापस्तम्बवचनं तूपवासेतरदैवकर्मविषयम् । सामान्यवचनस्यास्योपवासमात्रविषयैः पूर्ववचनैः संकोचनात् । उपवासेऽथ नापराह्णिकप्रतिपद्विषयं च । यच्च दैवान्तरेऽप्यनेन वचनेन द्वितीयाविद्धायाः प्रतिपदो विधानं तदपि कृष्णाया न तु शुक्लायाः । तस्याः "प्रतिपदाप्यमावास्येति"पूर्व विद्धाया विधानात् । न चैदं पूर्वविद्धत्वमुपवासमात्रविषयम् । अन्येषु तु आपस्तम्बवचनाच्छुक्लाप्युत्तरैवास्त्विति वाच्यम् । युग्मवचनस्योपवासमात्रविषयत्वे प्रमाणाभावात् । प्रत्युत सकलदैवविषययुग्मान्तरसाहचर्यात्सर्वविषयत्वस्यैवोचितत्वात् ।

न च पूर्वविद्धोपोष्यत्वविधायकपूर्वोदाहृतवचनवशाद् युग्मवचनवशाद् युग्मवचनस्यापि पूर्वविद्धाविधायकस्य प्रतिपदंशे उपवास एवोपसंहारो युक्तः । तेषामुभयप्रतिपद्विषयत्वेन युग्मवचनस्य च शुक्लप्रतिपन्मात्रविषयत्वेन भिन्नविषयत्वात् । कृष्णप्रतिपदर्थमावश्यकैस्तैरेव वचनैरर्थसिद्धावेतास्यानर्थक्यापत्तेश्च । न च पूर्वविद्धोपोष्यत्वप्रतिपादकान्यपि । युग्मवचनवशात् ।

"एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः" ।

इति वचनवशाच्च शुक्लप्रतिपद्विषयाण्येव ।

कृष्णा तूपवासेप्युत्तरैव "प्रतिपत्सद्वितीया स्यादि" ति वचनादिति माधवमतमपि युक्तम् । सर्वदैवविषयाद् युग्मवाक्यादेवोपवासेऽपि पूर्वविद्धासिद्धौ तन्मात्रविषयाणामन्वयतो व्यतिरेकतश्च प्रवृत्तानां तेषां सर्वेषामानर्थक्यप्रसङ्गात् । उपवासग्रहणस्योपलक्षणत्वप्रसङ्गाद्वा ।

अस्मन्मते तु सर्वाणि सार्थकानि । पूर्ववचनैरुपवासे पूर्वविद्धायामुभस्यां विहितायां युग्मापस्तम्बवचनयोर्दैवान्तरेषु शुक्लकृष्णभेदेन पूर्वोत्तरविद्धाविधानार्थत्वात् । आपराह्णिकत्वं च दैवान्तरेऽष्वपि शुक्लायाः पूर्वविद्धाया अपेक्षितमेव । "प्रतिपत्संमुखी" ति वचनेन पूर्वविद्धामात्रे तद्विधानादित्युक्तम् । तदभावे तु दैवान्तरेष्वऽपि सोत्तरैव । "प्रतिपत्सद्वितीया स्यादिति" सामान्यवचनात् । अत एव सायाह्नमात्रव्यापिन्या अपि पूर्वस्या अनुकल्पत्वेन ग्राह्यत्वं माधवोक्तमुपेक्षितम् । पूर्वोदाहृतवचने उत्तरार्द्धे प्रतिपद आपराह्णिकत्वविधानेन पूर्वार्द्धोक्तस्य सायाह्नमात्रव्यापित्वेन संमुखत्वस्य तिथ्यन्तरविषयत्वप्रतीतेः ।

तदयं संक्षेपः ।

उपोष्या प्रतिपत्पूर्वा शुक्ला कृष्णा तथैव च ।
यद्यसावपराह्णे स्यात्कार्त्स्न्येनैकदिशापि वा ॥
दैवान्तरेषु शुक्लैव पूर्वा साप्यापराह्णिकी ।
चेन्नापराह्णिकी सर्वा या पूर्वोक्ता परैव सा ॥
दैवान्तरेषु कृष्णा तु परा सर्वेति निर्णयः ।

## अथ द्वितीयाविवेचनम् ।

द्वितीया तु कृष्णा पूर्वा, शुक्ला परोपोष्या ॥
"तृतीयैकादशी षष्ठी तथा चैवाष्टमी तिथिः ।
वेधादधस्ताद्धन्युस्ता उपवासे तिथीस्त्विमाः" ॥

इति नारदीयवचने ।

"तृतीयास्त्ववेधेन पूर्वां द्वितीयां तत्प्रयुक्तोपवासे दूषयती" त्युक्त्या प्रतीयमानस्य तृतीयाविद्धद्वितीयानिषेधस्य—

"एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी।
त्रयोदशी उपोष्याः स्युः अमावास्या परान्विताः" ॥

इति विष्णुधर्मोत्तरगतस्य च तद्विधेर्विरोधे शुक्लकृष्णवाक्याभ्यां व्यवस्थाश्रयणात्। इदं हि वचनद्वयमेतदर्थमेवेत्युक्तं सामान्यनिर्णये। दैवान्तरेष्वप्येषैव व्यवस्था। युग्माग्निवाक्यस्य, "प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युते" त्यस्य च पूर्ववदेव व्यवस्थापनात्।

केचिद् युग्मवाक्यस्य स्वत एव शुक्लपक्षविषयत्वं मन्यन्ते। चतुर्दशीपौर्णमासीयुग्मसाहचर्यात्। सर्वेषामपि युग्मानां शुक्लपक्षगतत्वप्रतीतेः। तदयुक्तम्। सामान्यविषययुग्मादिश्रुतेः संनिधिरूपेण साहचर्येण संकोचयितुमशक्यत्वात्। पक्षद्वयवर्तिप्रतिपदमावास्यायुग्मसाहचर्यविशेषाच्च। तस्मादुभयपक्षगततिथिविषयमेव। युग्मवाक्यवाक्यान्तरविरोधे क्वचिच्छुक्लकृष्णवाक्याभ्यां व्यवस्थाप्यते परम्।

ननु सामान्यविधिनैवोपवासेऽपि परविद्धासिद्धौ पुनस्तत्र तस्या विधिरनर्थकः। नानर्थकः। सामान्यविधिद्वयेन पूर्वविद्धायां परविद्धायां च सर्वत्र प्राप्तायामुपवासे वचनान्तरेण परविद्धानिषेधे कृते तत्रैव कदाचित्तस्या अपि प्राप्त्यर्थम्। तस्यापेक्षितत्वात्। अन्यथोपवासे सामान्यवचनं बाधित्वा परविद्धा न कर्त्तव्यैव स्यादिति। सामान्यवचनसंवादिनां तद्विरुद्धानां च विधिरूपाणां निषेधरूपाणां चैकतिथिविषयाणां विशेषवचनानामियमेव गतिः। या च कृष्णद्वितीया उपवासेऽन्यत्र वा पूर्वा ग्राह्या, सा यदि पूर्वाह्णे प्रविष्टा भवति तदैव तादृशी ग्राह्या। नो चेत्सापि परैव।

"प्रतिपत्संमुखी कार्या या भवेदापराह्णिकी।
पौर्वाह्णिकी च कर्तव्या द्वितीया तादृशी विभो" ॥

इति स्कन्दपुराणात् ।

तादृशी संमुखी पूर्वविद्धेत्यर्थः ।

इदं च वचनं कृष्णद्वितीयाविषयमेव । तत्र प्राप्ते पूर्वविद्धत्वे पौर्वाह्णिकत्वविशेषमात्रविधाने लाघवात् । शुक्लायां पूर्वविद्धत्वस्याविधेयत्वेन गौरवात् । अत्र च वाक्ये द्वयोरेवोपादानाद् द्वेधाविभक्तदिनभागाद् द्वावेव पूर्वाह्णापराह्णौ यद्यपि भासेते । तथापि सायाह्नमात्रव्यापिन्यामविद्यमानस्यापराह्णिकत्वस्य द्वेधाविभागेनासंभावादपराह्णस्य पञ्चधाविभागेनैव ग्राह्यत्वात्पूर्वाह्णोऽप्यह्नः पूर्वो भाग इति योगेन पञ्चधाविभागेनैव प्रातरात्मको ग्राह्यः । तत्र प्रविष्टा पूर्वा ग्राह्या ।

तेन या पूर्वेद्युः प्रातःकालं सर्वं परित्यज्य प्रवृत्ता परेद्युस्त्रिमुहूर्त्ता ततोऽधिका वा भवति । सा कृष्णापि परैव । पूर्वेद्युः पौर्वाह्णिकत्वाभावात् । त्रिमुहूर्त्तसत्त्वेन च परविद्धवचनानां प्रवृत्तेरिति पौर्वाह्णिकवचनस्य व्यतिरेकतः फलम् । न तु या पूर्वेद्युः सर्वं प्रातःकालं परित्यज्य प्रवृत्ताप्युत्तरदिने नास्त्येव त्रिमूहूर्त्तन्यूना वा साप्युत्तरेति । तत्र परविद्धावचनानामप्रवृत्तेः । परिशेषात्पूर्वस्या एव ग्राह्यत्वात् । इदं च वचनं प्राच्या न लिखन्ति ।

तदयं निर्णयः ।

शुक्ला द्वितीया सर्वेषु दैवेषु परयुग् भवेत् ।
कृष्णा तु पूर्वा तेष्वेव पूर्वाह्णे यदि सा भवेत् ॥

## अथ तृतीयाविवेचनम् ।

तृतीया तु रम्भाव्रतातिरिक्तेषु उपवासादिसकलदैवकार्येषु चतुर्थीयुतैव ग्राह्या ।

“रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम ।
अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते” ॥

इति ब्रह्मवैवर्त्त वचनात् ।

गणो गणेशस्तेन तद्दैवत्या चतुर्थी । सर्वग्रहणात् ।

"एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः" ॥

इति बृहस्पतिवचने उपवासग्रहणं तृतीयांशे सकलदैवकार्यमुपलक्षणम् । एतस्यैव चतुर्थीयुक्ततृतीयाविधेरुपोद्बलिका—

"चतुर्थीसंयुता या च सा तृतीया फलप्रदा ।
अवैधव्यकरी स्त्रीणां पुत्रपौत्रप्रदायिनी" ॥

इति प्रशंसा आपस्तम्बाद्युक्ता ।

"तृतीया तु न कर्तव्या द्वितीयासंयुता तिथिः ।
या करोति विमूढा स्त्री पुरुषो वा शिखिध्वज ॥
द्वितीयासंयुतां तात पूर्वधर्माद्विलुप्यते ।
विधवात्वं दुर्भगत्वं भवेन्नास्त्यत्र संशयः" ॥

इति स्कन्दपुराणाद्युक्तो निन्दासहितो निषेधश्च । निषेधस्यापि रम्भाव्रतव्यतिरिक्तविषयत्वं स्कन्दपुराण एव दर्शितम् ।

"द्वितीयया तु या विद्धा तृतीया न कदाचन ।
कर्तव्या व्रतिभिस्तात धर्मकामार्थतत्परैः" ॥

'विहायैकां तु रम्भाख्यां तृतीयां पुण्यवर्धनीमि' ति ।

निषेधप्रयोजकश्चात्र द्वितीयावेधो न सामान्यरूपस्त्रिमुहूर्त्तात्मक एव । किन्तु दशम्या इव कलाकाष्ठादिरूपोऽपि । अत एव च तृतीयापि चतुर्थीयुता अल्पाप्येकादशीवद् ग्राह्या । न तु त्रिमुहूर्त्तत्वकर्मकालव्याप्त्याद्यादरस्तस्याम् ।

"कला काष्ठापि वा चैव द्वितीया संप्रदृश्यते ।
सा तृतीया न कर्तव्या कर्तव्या गणसंयुता" ॥

इति स्कान्दात् ।

"द्वितीयाशेषसंयुक्तां तृतीयां कुरुते तु यः ।
स याति नरकं घोरं कालसूत्रं भयंकरम्" ॥
"द्वितीयाशेषसंयुक्तां या करोति विमोहिता ।
सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः" ॥

इति निन्दार्थवादे शेषशब्दमात्रश्रवणाच्च । अन्यथा "द्वितीया-संयुक्ता" मित्येवावक्ष्यत् । अयं चाल्पवेधप्रयुक्तोऽपि निषेधस्तत्प्रयुक्तश्चाल्पाया अप्युत्तरस्याः परिग्रहो गौरीदैवत्यव्रतविषय एव । "विहायैकां तु रम्भाख्या" मिति पर्युदासे तत्सदृशानामेव व्रतान्तराणां प्रतीतेः । नञिव युक्तमन्यसदृशार्थ इति न्यायात् । तत्रैव तथा शिष्टसमाचाराच्च । व्रतान्तरेषु तु सामान्यविधेश्च । ब्रह्मवैवर्त्तगतात्त्रिमुहूर्त्तद्वितीयाविद्धाया एव वर्जनम्, त्रिमुहूर्त्ताया एव चतुर्थीयुक्ताया ग्रहणं युक्तम् । न च ब्रह्मवैवर्त्तेऽपि "रम्भाख्यां वर्जयित्वे" ति पर्युदासाद् गौरीव्रतानामेव ग्रहणं स्यादिति वाच्यम् । तत्रासदृशानामपि ग्रहणार्थमेव "सर्वकार्येष्वि" त्युक्तत्वात् । अत एव वैशाखशुक्लतृतीयाख्याक्षयतृतीयाव्रतमप्युत्तरविद्धायामेव कर्तव्यम् । विशेषतोऽपि तत्र तद्विधिः पूर्वानिषेधश्च नारदीये—

"वैशाखे सितपक्षे तु तृतीया रोहिणीयुता ।
दुर्लभा बुधवारेण सोमेनाऽपि युता तथा ॥
रोहिणीबुधयुक्तापि पूर्वविद्धा विवर्जिता ।
भक्त्या कृतापि मान्धात ? पुण्यं हन्ति पुरा कृतम् ॥
गौरीविनायकोपेता रोहिणीबुधसंयुता ।
विनापि रोहिणीयोगात्पुण्यकोटिप्रदा सदा" इति ॥

यदा तु चतुर्थीयुक्ता किञ्चिदपि न लभ्यते। तदा गौरीव्रतेष्वपि त्रिमुहूर्त्तालाभे चेतरेष्वपि द्वितीयायुतापि ग्राह्या।

"एकादशी तृतीया च षष्ठी चैव त्रयोदशी।
पूर्वविद्धापि कर्तव्या यदि न स्यात्परेऽहनि"॥

इति वृद्धवशिष्ठवचनात्।

रम्भाव्रते तूपवासरूपे अनुपवासरूपे च द्वितीयाविद्धैव ग्राह्या।

"कृष्णाष्टमी बृहत्तापा सावित्रीवटपैतृकी।
अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः"॥

इति निगमात्।

"बृहत्तपा तथारम्भा सावित्रीवटपैतृकी।
कृष्णाष्टमी च भूता च कर्तव्या संमुखी तिथिः"॥

इति स्कन्दपुराणाच्च।

एवं सति "युग्माग्नी" ति युग्मवचनमपि वचनान्तरवशाद्रम्भाव्रतविषयमेव। यत्तु "तृतीयायाः शुद्धाया आधिक्येऽपि शुद्धामपि हित्वा अधिका चतुर्थीयुक्तैव गौरीव्रतेषु ग्राह्ये"त्येतावत्पर्यन्तं माधवेनोक्तम्। तत्र पूर्वस्यां निषेधाप्रवृत्तेर्विधेश्चेदृग्विषयस्यादर्शनाद्य-द्येतावत्पर्यन्तं शिष्टाचारस्तदा स एव मूलम्।

तदयं संक्षेपः।

रम्भाभिन्नेषु सर्वेष्वप्युपवासादिकर्मसु।
तृतीया गणविद्धा स्यान्न तु विद्धा द्वितीयया॥
गौरीव्रतेषु तत्त्याज्या कलयापि द्वितीयया।
युक्ता मुहूर्त्तमात्रापि चतुर्थीयुक्तु शस्यते॥
यदा चतुर्थ्या स्वल्पापि त्रिमुहूर्ताथवा न सा।
गौरीव्रतेऽन्यदैवे च तदा पूर्वापि गृह्यते॥
रम्भाव्रते तु पूर्वैव तदलाभे परा भवेत्।

# अथ चतुर्थीविवेचनम् ।

(१)

चतुर्थी तु विनायकनागगौरीव्रतानि उपवासपूजादिरूपाणि विहायान्यदेवताप्रीत्यर्थे उपवासे व्रतान्तरे वा पञ्चमीयुता ग्राह्या । "युगभूताना" मिति युग्मवाक्यात् ।

---

(१) अयमंशः पार्श्वभागे लिखितो वर्त्तते—

श्रावणकृष्णचतुर्थ्यां संकष्टचतुर्थीव्रतम् । स्कान्दे—

"श्रावणे बहुले पक्षे चतुर्थ्यां तु विधूदये ॥

गणेशं पूजयित्वा तु चन्द्रायार्घं च दीयते" इति ।

इयं चन्द्रोदयव्यापिनी ग्राह्या । "कर्मणो यस्य यः कालः" इति वचनात् । तत्काले चन्द्रर्घ्यदानविधानेन चन्द्रोदयव्रतता । 'चन्द्रोदयव्रते चैव तिथिस्तात्कालिकी स्मृते' ति वचनाच्च दिनद्वये चन्द्रोदये सत्त्वेऽसत्त्वे वा पूर्वा ग्राह्या । "चतुर्थी च तृतीयाया" मिति ब्रह्मवैवर्त्तात् ।

गणेशगौरीबहुलाव्यतिरिक्ताः प्रकीर्तिकाः ।
चतुर्थ्यः पञ्चमीविद्धा देवतान्तरयोगतः ॥

इति वचनाच्च ।

न च तृतीयाविद्धाविधायकानि वचनानि दिवा त्रिमुहूर्त्तवेधे सत्येव प्रवर्त्तन्ते न रात्रियोगमात्र इति वाच्यम् । रात्रिसाध्यकर्मसु रात्रावपि वेधस्य जन्माष्टमीप्रकरणे माधवादिभिर्दर्शितत्वात् । अत एव महालक्ष्मीव्रतसमापने दिनद्वयेऽष्टम्याश्चन्द्रोदव्यापित्वे—

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धैव कर्तव्या परविद्धा न कुत्रचित्" ॥

इति वचनात्पूर्वविद्धा ग्राह्येत्युक्तं हेमाद्रौ मदनरत्ने च ।

यानि तु "चतुर्थी गणनाथस्ये" त्यादीनि वचनानि । तानि सिद्धिविनायकादिव्रतविषयकाणि । तेषु मध्याह्नस्य कर्मकालत्वात् । "प्रातः शुक्लै" रिति वचनात् । अत एव माधवेन मध्याह्नस्य कर्मकालत्वमङ्गीकृत्यैव विनायकव्रते "मध्याह्नव्यापिनी ग्राह्ये" त्युक्तम् । तस्यादुभयत्र चन्द्रोदये सत्त्वेऽसत्त्वे वा पूर्वैवेति न्याय्यः पन्था इत्यलं बहुनेति कृत्यरत्नावल्याम् ।

"एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः" ॥

इति वृद्धवसिष्ठवचनाच्च ।

विनायकनागव्रतयोस्तु मध्याह्नव्यापिनी ग्राह्या । तत्र मध्याह्नस्य कर्मकालत्वात् ।

"प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप"

इति गणपतिकल्पे ।

युगं मध्यन्दिने यत्र तत्रोपोष्य फणीश्वरान् ॥
क्षीरेणाप्याय्य पञ्चम्यां पारयेत्प्रयतो नरः ।
विषाणि तस्य नश्यन्ति न ते हिंसन्ति पन्नगाः" ॥

इति पुराणवचने च माधवोदाहृते मध्याह्ने विनायकनागपूजाविधानात् । युगं चतुर्थी ।

अत एव—

"चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ।
मध्याह्नव्यापिनी सा तु परतश्चेत्परेऽहनि" ॥

इति बृहस्पतिवचने स्पष्टमेव मध्याह्नव्यापिन्या विनायकव्रते ग्राह्यत्वमुक्तम् । अत्र च "परतश्चेत् परेऽहनी" ति परेद्युरेव मध्याह्नव्याप्तिपक्ष एव परविद्धाविधानात् इतरेषु सर्वेष्वपि पक्षेषु तृतीयायुक्तैव विनायकव्रते ग्राह्या ।

एवं—

"चतुर्थीसंयुता कार्या तृतीया च चतुर्थिका ।
तृतीयया युता नैव पञ्चम्या कारयेत्कचित्" ॥

इति ब्रह्मवैवर्त्ते तृतीयायुक्तचतुर्थीविधिः ।

द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ॥

इति पञ्चम्याः पूर्वतिथिदूषकत्ववचनात्तद्युक्तचतुर्थीनिषेधश्च विनायकव्रतविषय एव । अत एव ब्रह्मवैवर्त्त एव वचनान्तरम्—

"चतुर्थीसंयुता या च सा तृतीया फलप्रदा ।
चतुर्थी च तृतीयायां महापुण्यफलप्रदा ॥
कर्तव्या व्रतिभिर्वत्स गणनाथसुतोषिणी" ति ।

गणनाथं सुतरां तोषयतीति तद्दैवत्योपवासाद्यङ्गभूतेत्यर्थः ।

नागव्रते तु पूर्वेद्युरेव । मध्याह्नव्याप्तौ पूर्वा । कर्मकालव्याप्तिप्राबल्यात् । अन्येषु सर्वपक्षेषूत्तरा । पञ्चम्या नागतिथित्वेन तद्योगस्य तद्व्रते प्रशस्तत्वात् । युग्मादिसामान्यवचनाच्च । तृतीयायुक्तसामान्यवचनानां ब्रह्मवैवर्त्तवचने विनायकव्रतविषये व्यवस्थापनात् । गौरीव्रते तु गौरीदैवत्यतृतीयायोगस्य प्रशस्तत्वात्तृतीयायुतैव ग्राह्या ।

"जया च यदि संपूर्णा चतुर्थी ह्रसते पुनः ।
जया सैव हि कर्तव्या नागविद्धां न कारयेत्" ॥

इति द्वितीयदिने ह्रासेन चतुर्थ्याः पञ्चमीविद्धत्वे संपूर्णदिनव्याप्तित्वेन संपूर्णा तृतीयापि चतुर्थीव्रते ग्राह्या न त्वतिदुष्टा पञ्चमीयुक्ता चतुर्थीति कैमुत्यन्यायेन तृतीयायुक्तचतुर्थीविधानस्य गौरीव्रतविषयत्वस्यैवोचितत्वाच्च ।

अत एव—

गणेशगौरीबहुलाव्यतिरिक्ताः प्रकीर्त्तिताः ।
चतुर्थ्यः पञ्चमीविद्धा देवतान्तरयोगतः" ॥

इत्यपि वचनं ब्रह्मवैवर्त्तत्वेन मदनरत्नादिषु लिखितम् ।

"गौर्याश्चतुर्थी वटधेनुपूजा दुर्गार्चनं दुर्भरहोलिके च ।
वत्सस्य पूजा शिवरात्रिरेताः परा विनिघ्नन्ति नृपं सराष्ट्रम्" ॥

इति पुराणसमुच्चयवचनं च ।

गौर्याः गौरीव्रतस्य सम्बन्धिनी चतुर्थी । धेनुपूजा तत्सम्बन्धिनी बहुला चतुर्थी । वत्सस्य पूजा वत्सद्वादशी ।

तदयं निर्णयः ।

गणेशनागव्रतयोरुपवासादिकर्मयोः ।
मध्याह्नव्यापिनी ग्राह्या चतुर्थी तत्र तादृशी ॥
परैव चेत्परा नो चेत्पूर्वा सर्वत्र गाणपे ।
नागव्रते तादृशी चेत्पूर्वैव तदियं तथा ॥
अन्यथा सर्वपक्षेषु परा गौरीव्रतेष्वपि ।
तृतीयया युता ग्राह्या चतुर्थी ह्रासतो यदि ॥
परेद्युः पञ्चमीविद्धा पूर्वेद्युः सकलं दिनम् ।
तृतीयैव तदा तस्यामप्युत्तरतिथिव्रतम् ॥

गौर्या कार्ये सर्वथात्र नागविद्धा निषिध्यते ।

एतद्व्रतातिरिक्तेषु तूपवासादिकर्मसु ।
नागविद्धैव पूर्वापि तदलाभे चतुर्थिका ॥

## अथ पञ्चमीविवेचनम् ।

पञ्चमी तूपवासादिसर्वकर्मसु चतुर्थीविद्धैव ग्राह्या । "युगभूतानां" मिति वचनात् । "पञ्चमी सप्तमी चैवे" ति पूर्वोदाहृतपैठीनसिवचनाच्च । "प्रतिपत्पञ्चमी चैव उपोष्या पूर्वसंयुते" ति जाबालिवचनेन "एकादशी तथा षष्ठी"ति पूर्वोदाहृतगार्ग्यवचनेन चोपवासे विशेषतः पूर्वविद्धाविधानात् । "प्रतिपत्पञ्चमी भूता" इति ब्रह्मवैवर्त्तवचनेन "तृतीयैकादशी षष्ठी" ति नारदीयवचनेन तथैव परविद्धानिषेधाच्च ।

यत्तु "पञ्चमी तु प्रकर्तव्या षष्ठ्या युक्ता तु नारदे"ति ब्रह्मवैवर्त्त-वचनं परविद्धाविधायकम् । तत् "स्कन्दोपवासे स्वीकार्या पञ्चमी परसंयुते" ति तत्रत्याद्दैववचनाद्वाक्यशेषस्थानीयात्स्कन्दव्रतविषयं नागव्रतविषयं च ।

"श्रावणे पञ्चमी शुक्ला सम्प्रोक्ता नागपञ्चमी ।
तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता हिताः" ॥

इति मदनरत्नलिखिताचारसम्वादिवचनात् ।

अत एव नागपञ्चमीमात्रोपलक्षणमेतत् । सर्वथा तथाचारात् । अत्र "तां परित्यज्य चतुर्थीविद्धा ग्राह्या"इत्युक्त्या तस्याश्चतुर्थीविद्धाया निषेधावगमात् । त्रिमुहूर्त्तचतुर्थीयुक्ता पूर्वेद्युः, परेद्युश्च त्रिमुहूर्त्ता नागपञ्चमी परा । अन्यथा पूर्वैवेति द्रष्टव्यम् ।

हेमाद्रिगौडाश्च केचित्पञ्चमीविषये विरुद्धमिदं वचनद्वयं शुक्लकृष्ण-भेदेन व्यवस्थापयन्ति । केचित्तु पित्र्यदैवविषयत्वेन । तद्द्वयमपि—

"चतुर्थीसंयुता कार्या पञ्चमी परया न तु ।
दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथाऽसिते" ॥

इति हारीतवचनेन माधवाद्युदाहृतेन विरुद्धम् । अत्र पित्र्यग्रहणं दृष्टान्तत्वेन । याप्युपवासतदितरकर्मविषयत्वेन पूर्वोत्तरविद्धयोर्व्य-वस्था द्वितीया हेमाद्रिणोक्ता । सापि या पञ्चमी परसंयुता स्वीका-र्या सा "स्कन्दोपवास" इति वचनेनैव परविद्धाया विषयविशेषे व्यवस्थापनाद्यवस्थापकान्तरानपेक्षणादयुक्ता । अत एव चोपवासे पूर्वविद्धाविधायकैः सामान्यविषयस्य युग्मवचनस्य तत्रैवोपसंहार इत्यपि न युक्तम् । पूर्वविद्धाया उपवासविषयत्वे उत्तरविद्धायाश्च स्कन्दव्रतमात्रविषयत्वे इतरेषु न कापि इति संदेहप्रसङ्गात् । युग्मवाक्यस्याप्युपवासविषय एव परभागस्योक्तत्वाच्च । वचनान्त-रेष्वप्युपलक्षणत्वेनोपवासग्रहणोपपत्तेरुपसंहारकत्वासामर्थ्यात् ।

तस्मात्—

"सर्वस्मिन्नुपवासादौ पक्षयोः शुक्लकृष्णयोः ।
पञ्चमी पूर्वविद्धैव स्कन्दनागव्रते परा" ॥

## अथ षष्ठीविवेचनम् ।

षष्ठी तु स्कन्दव्रतातिरिक्ते सर्वत्रोपवासादौ सप्तमीविद्धा ग्राह्या । "षण्मुन्यो" रिति युग्मवाक्यात् ।

"एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः" ॥

इति विष्णुधर्मोत्तराच्च । उपवासग्रहणं पूर्ववत् ।

"नागविद्धा च या षष्ठी शिवविद्धा च सप्तमी ।
दशम्येकादशीविद्धा नोपोष्याः स्युः कथंचन" ॥

इति शिवरहस्यसौरपुराणयोः ।

"नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ।
कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासराः" ॥

इति च निगमे पूर्वविद्धानिषेधात् । नागः पञ्चमी । शिवो रुद्रश्चाष्टमी । दिवाकरः सप्तमी । कामस्त्रयोदशी । विष्णुर्द्वादशी । निषेधप्रयोजकश्चात्र पञ्चमीवेधो न सामान्यरूपस्त्रिमुहूर्त्तात्मकः । किं तु षण्मुहूर्त्तात्मकः ।

"नागो द्वादशनाडीभिर्दिक्पञ्चदशभिस्तथा ।
भूतोऽष्टादशनाडीभिर्दूषयन्त्युत्तरां तिथिम्" ॥

इति स्कन्दपुराणवचनात् ।

स्कन्दषष्ठी तु पञ्चमीयुतैवोपोष्या ।

"कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत्" ॥

इति ब्रह्मवैवर्त्तवचनात् ।

कृष्णाष्टमी कृष्णपक्षगताष्टमी । व्रतकाण्डगतरुद्रदैवत्यकृष्णाष्टमी । समाख्यातव्रतसम्बन्धिनी वा । जन्माष्टमीत्यपि कश्चित् ।

ननु षण्मुहूर्त्तमितपञ्चमीवेधवत्यां स्कन्दव्रतमपि न कर्तुमर्हति । "नागो द्वादशनाडीभि" रिति वचनात् । इदं हि वचनं पूर्वविद्धाकर्त्तव्यविषयमेव युक्तम् । न तूत्तरविद्धाकर्त्तव्यविषयम् । तदा हि षण्मुहूर्त्तात्मकपञ्चमीयुक्तायामेव पूर्वस्यां तेषामकर्तव्यत्वे त्रिमुहूर्त्ताधिकक्षयासंभवेनोत्तरदिने तादृश्यास्त्रिमुहूर्त्तसत्त्वावश्यंभावेन ।

"एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धापि कर्तव्या यदि न स्यात्परेऽहनि" ॥

इति उत्तरविद्धाकर्त्तव्यविषयवशिष्ठवचनानुपपत्तेः ।

तिथिक्षयवशादुत्तरविद्धाऽलाभे स्कन्दव्रतवदन्यान्यपि व्रतानि पूर्वविद्धायामेव कर्तव्यानीत्यर्थे प्रमाणत्वेनेदं वचनमुदाहरतो माधवस्याप्ययमेवाभिप्रायो लक्ष्यते ।

अत्रोच्यते । "नागो द्वादशनाडीभि"रित्येतत्तावद्दूषकतानुवादेन नाड़ीविशेषविधायकं यत्र पञ्चमीविद्धा षष्ठी निषिद्धा तद्विषयमेव-युक्तम् । वशिष्ठवचनं तु यदि परेऽहन्येकभुक्तादिकाले मध्याह्नादौ षष्ठी न स्यात्, किन्तु पूर्वेऽहन्येव स्यादिति व्याख्यानेन सामान्यतः सर्वत्र निषिद्धाया नागविद्धायाः षण्मुहूर्त्त वेधवत्या अपि एकभुक्तादौ प्रतिप्रसावर्थम् । युक्तं चैतत् । कलशास्त्रस्य प्रबलत्वात् । अत एव

हेमाद्रिणापि द्वादशनाड्यादिवेधस्य नक्तैकभुक्तादिव्यतिरिक्त-विषयत्वमुक्तमिति।

तस्मादेवं निर्णयः—

स्कन्दीयान्येषु सर्वेष्वप्युपवासादिकर्मसु।
परविद्धैव षष्ठी स्यान्नागविद्धा न कर्हिचित्॥
दूषको नागवेधश्च षण्मुहूर्त्तात्मको मतः।
षण्मुहूर्त्तमितेनापि युता नागे न या भवेत्॥
स्कन्दोपवासे स्वीकार्या सैव षष्ठीति निर्णयः।

## अथ सप्तमीविवेचनम्।

सप्तमी तूपवासेऽन्यत्र पूर्वविद्धैव ग्राह्या। "षण्मुन्यो" रित्यादि युग्मशास्त्रात्। "पञ्चमी सप्तमी चैवे" त्यादि पैठीनसिवचनाच्च।

"षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी।
सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम्"॥

इति स्कन्दपुराणे परविद्धानिषेधाच्च।

न च—

"षष्ठ्या युता सप्तमी च कर्तव्या तात सर्वदा।
षष्ठी च सप्तमी यत्र तत्र संनिहितो रविः"॥

इति स्कन्दपुराणात्,

"षष्ठीसमेता कर्तव्या सप्तमी नाष्टमीयुता।
पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम्"॥

इति भविष्यत्पुराणवचनाच्च,

सौरोपवास एव सप्तमी पूर्वविद्धा युक्ता नान्यत्रेति शङ्कनीयम्।

"सप्तमी नाष्टमीयुक्ता न सप्तम्या युताष्टमी।
सर्वेषु व्रतकल्पेष्वि" ति ब्रह्मवैवर्त्तवचनात्।

यदा पूर्वेद्युरस्तमयपर्यन्ता षष्ठी, परेद्युश्च क्षयवशादष्टम्या विद्धा सप्तमी, तदा गुणानुरोधेन प्रधानलोपस्यान्याय्यत्वान्निषेधमतिक्रम्याप्युत्तरविद्धां गौणकालत्वेन स्वीकृत्य तत्रैवोपवासादि सर्वं कार्यम्।

तस्मात्—

"सर्वत्राप्युपवासादौ पूर्वविद्धैव सप्तमी।
ग्राह्या तस्या अलाभे तु परविद्धापि गृह्यताम्" ॥

# अथाष्टमीविवेचनम्।

अष्टमी तु शुक्लोत्तरा, कृष्णा च पूर्वा उपवासादिसर्वकर्मसु ग्राह्या।

"शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी।
पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥
उपवासादिकार्येषु एष धर्मः सनातनः।
कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ॥
पूर्वविद्धा तु कर्तव्या परविद्धा न कर्हिचित्।
उपवासादिकार्येषु एष धर्मः सनातनः" ॥

इति निगमवचनात्। एवं सति "वसुरन्ध्रयो" रिति युग्मवचनेन—

"अष्टमी सप्तमीयुक्ता सप्तमी नाष्टमीयुता।
नवम्या सह कार्या स्यादष्टमी नात्र संशयः" ॥

इत्यादीनि पद्मपुराणादिवचनानि च शुक्लपक्षाष्टमीविषयाणि ।

दूर्वाष्टमी तु शुक्लापि पूर्वविद्धैव ग्राह्या ।
"श्रावणी दौर्गनवमी दूर्वा चैव हुताशनी ॥
पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनम्" ॥

इति बृहद्यमवचनात् ।

हुताशनी होलाका वह्निव्रततिथिर्वा । रम्भातृतीयेति कश्चित् ॥

"शुक्लाष्टमी तिथिर्या तु मासि भाद्रपदे भवेत् ।
दूर्वाष्टमी तु सा ज्ञेया नोत्तरा सा विधीयते" ॥

इति हेमाद्रिमदनरत्नधृतपुराणसमुच्चयवचनाच्च ।

इदं च दूर्वाव्रतं ज्येष्ठामूलरहितायां भाद्रशुक्लाष्टम्यां सिंहस्थे सूर्ये अगस्त्येऽनुदिते मध्याह्नव्यापिन्यां कर्त्तव्यं नित्यं च ।

"शुक्ले भाद्रपदे मासि दूर्वा संज्ञा तु याष्टमी ।
सिंहार्क एव कर्तव्या न कन्यार्के कदाचन ।
सिंहस्थे सोत्तमा सूर्येऽनुदिते मुनिसत्तमे" ॥

इति स्कन्दपुराणात् ।

"मुहूर्त्ते रौहिणेऽष्टम्यां पूर्वा वा यदि वा परा ।
दूर्वाष्टमो तु सा कार्या ज्येष्ठां मूलं च वर्जयेत् ॥
या न पूजयते दूर्वां मोहादिह यथाविधि ।
त्रीणि जन्मानि वैधव्यं लभते नात्र संशयः ॥
तस्मात्संपूजनीया सा प्रतिवर्षं वधूजनैः ।
सुखसन्तानजननी भर्त्तुः सौख्यकरी सदा" ॥

इति पुराणसमुच्चयवचनाच्च ।

तेन पूर्वस्याः कर्मकालास्पर्शे सत्यपि वा तत्स्पर्शे ज्येष्ठामूलान्यतरयोगे उत्तरापि तद्रहिता कर्मकालस्पर्शिनी दूर्वाव्रते ग्राह्या भवति। नित्यत्वाच्च ज्येष्ठामूलादियोगरहिताया यस्मिन्वर्षे अलाभस्तत्राप्यनुकल्पेनानुष्ठानम्। न तु सर्वथा त्यागः। स च—

"कर्तव्या त्वेकभुक्तेन ज्येष्ठा मूलं यदा भवेत्।
दूर्वामभ्यर्चयेद् भक्त्या न वन्ध्यं दिवसं नयेत्"॥

इति तत्रैवोक्तः।

निषिद्धयोगाभावे स्त्रीभिः स्वयं संपूज्य दूर्वामनग्निपक्वभक्षणादि यथाविधि कर्त्तव्यम्। निषिद्धयोगे तु ब्राह्मणेन पूजां कारयित्वैकभुक्तं कर्तव्यमित्यर्थः। ज्येष्ठामूलग्रहणं निषिद्धकालमात्रोपलक्षणम्। तत्राप्यपेक्षासत्त्वात्।

यच्च "भाद्रपदशुक्लाष्टमीमारभ्याग्रिमकृष्णाष्टमीपर्यन्तं कर्तव्यं महालक्ष्मीव्रतम्" स्कन्दपुराणे उक्तम्। तस्यांप्रक्रम इतरव्रतवन्नवमीयुक्तायामेव। ज्येष्ठानक्षत्रयुक्तायामसम्भवे केवलायामपि। समापनं तु यत्कृष्णाष्टम्यां तच्चन्द्रोदयव्यापिन्यां कर्तव्यम्। तत्काले चन्द्रार्घ्यदानविधानात्। चन्द्रोदयव्रतत्वेन "चन्द्रोदयव्रते चैव तिथिस्तात्कालिकी स्मृते" ति विशेषवचनात्सामान्यवचनाच्च। उभयत्र चन्द्रोदये सत्त्वे कृष्णात्वात्पूर्वा। यद्युत्तरदिने चन्द्रोदयोत्तरं त्रिमुहूर्त्ता तदोत्तरैव।

"पूर्वा वा परविद्धा या ग्राह्या चन्द्रोदये तु या।
त्रिमुहूर्त्ता तु सा पूज्या परतश्चोर्ध्वगामिनी"॥

इति पुराणसमुच्चयवचनात्।

यच्च भाद्रपदशुक्लाष्टम्यामेव ज्येष्ठायुक्तायामेव लिङ्गपुराणे उक्तम्। तत्रैवेतिहासपूर्वमलक्ष्मीविनिवृत्तये स्त्रीणां पूज्यत्वेनोक्ताया

लक्ष्म्याः पूर्वं समुद्रमथनादुत्पन्नत्वेन ज्येष्ठा समाख्या। अलक्ष्म्या ज्येष्ठाशब्देन पूजनम्। तत्र यैव ज्येष्ठायुक्ता सैव ग्राह्या पूर्वा परा वा।

"कन्यास्थार्काष्टमी शुक्ला ज्येष्ठर्क्षे महती स्मृता।
अलक्ष्मीपरिहाराय ज्येष्ठां तत्र प्रपूजयेत्" ॥

इति लिङ्गपुराणात्।

अत्र कन्यास्थार्कयोगेन प्राशस्त्यमात्रम्। मासस्तु भाद्रपदश्चान्द्र एव ग्राह्यः।

"मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुते।
यस्मिन्कस्मिन्दिने वापि ज्येष्ठादेवीं प्रपूजयेत्" ॥

इति पुराणसमुच्चयवचनादिति हेमाद्रिः।

यस्मिन्कस्मिन्दिने ज्येष्ठानक्षत्रयुक्तायां पूर्वस्यां वाष्टम्यामित्यर्थः।

वस्तुतस्तु यस्मिन्कस्मिन्दिने यस्यां कस्यांचित्तिथाविति तिथिव्रताद्भिन्नं नक्षत्रमात्रापेक्षं व्रतं यत् स्कन्दपुराणे—

"मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुते।
यस्मिन्कस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनम्" ॥

इत्युपक्रम्योक्तं तद्विषयमिदं वचनम्। अत एव नक्षत्रमात्रनिर्णयार्थं स्कन्दपुराणवचनम्—

"यस्मिन्दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्वमप्यणुः।
तस्मिन्हविष्यं पूजा च न्यूना चेत्पूर्ववासरे" ॥ इति ॥

अत एव हेमाद्रिणैव व्रतखण्डे नक्षत्रव्रतप्रकरणे षोडशदिनसाध्यान्महालक्ष्मीव्रताज्ज्येष्ठायुक्ताष्टमीमात्रसाध्याज्ज्येष्ठापूजाव्रताच्च भिन्नत्वेन

प्रतिसंवत्सरकर्तव्यं विद्यास्त्रीलाभादिसर्वफलसाधनं सोद्यापनं सविस्तरपूजाप्रकारयुक्तं स्कन्दपुराणगतमन्यपुराणगतं च ज्येष्ठाव्रतमुद्धृतम्।

मदनरत्नादौ च नीलज्येष्ठेत्यपि योगविशेषेणोत्तरपदार्थप्रधानं ज्येष्ठानक्षत्रस्यैवनाम। यद्यपि च—

"तत्राष्टम्यां यदा वारो भानोर्ज्येष्ठर्क्षमेव च।
नीलज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिका"॥

इति तल्लक्षणाभिधानार्थे स्कन्दपुराणवचने सप्तमीनिर्दिष्टाया अष्टम्या आधेयव्याप्यत्वेन प्राधान्यावगमात्सेति तस्या एव प्रतिनिर्देशः, तत्समानाधिकरणं नामापि तस्या एवेति प्रतिभाति। "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा" इत्यत्र पयस इव। तथापि वैश्वदेवीशब्दान्वयलभ्यदेवतान्वयेन यागविनियोगलाभेन पयसः प्राधान्यसंभवात्सर्वं युक्तम्। न तु तथाष्टम्याः प्राधान्यं संभवति। येन रूढ्या लक्षणया वा तन्नामधेयं नीलज्येष्ठेति कल्प्येत।

न चात्रापि—

"कृतस्नानो नरः कुर्यात्तस्यामन्यत्र वा दिने।
भक्तियुक्तः शुचिर्भूत्वा ज्येष्ठायाः परिपूजनम्"॥

इत्युत्तरवचने "तस्या" मित्यष्टम्या एव विनियोगात्संभवत्येव तदिति वाच्यम्। उपक्रमे ज्येष्ठायुक्तस्य यस्य कस्यापि दिनस्य कर्मकालत्वावगमेन तद्विरुद्धस्याष्टम्यास्तत्र विनियोगस्यासंभवात्। न चैतदनुरोधादुपक्रमवचनमेव यस्मिन्कस्मिन्दिने पूर्वस्यामुत्तरस्यां वाष्टम्यामित्येव व्याख्येयमिति वाच्यम्। उत्पत्तिविधावेव खण्डतिथिविनियोगस्य क्वाप्यदर्शनात्। तेनोपक्रमानुरोधान्नक्षत्रमेव नीलज्येष्ठालक्षणवाक्ये सेति परामृश्यते। स्त्रीलिङ्गं च "सा वैश्वदेव्यामिक्षा" इतिवत्। माधवस्य तु तिथावेव सर्वमिदं योजयतोऽभिप्रायं न विद्मः।

"नभोऽष्टम्या" मिति तु तेनोदाहृतः पाठः प्रमादिक एव । तेन नक्षत्र-मात्रापेक्षे व्रते ज्येष्ठानक्षत्रस्य खण्डत्वेऽष्टमीभानुवारयुगन्यतरयुग्वा नक्षत्रं ग्राह्यम् । अन्यतरयोगस्याप्यभावे मध्याह्नादूर्ध्वमनुवर्त्तमानं ग्राह्यमिति ।

यस्तु मिलितशिवशक्तिदेवत्यः पूजोपवासादिरुत्सवो व्रतपर्यायः । स पक्षद्वयगतोऽपि नवमीयुक्तायामेवाष्टम्यां कार्यः ।

"अष्टम्या नवमी विद्धा नवम्या चाष्टमी युता ।
अर्द्धनारीश्वरप्राया उमामाहेश्वरीतिथिः ॥
अष्टमीनवमीयुग्मे महोत्साहे महोत्सवः ।
शिवशक्त्योः शिवक्षेत्रे पक्षयोरुभयोरपि" ॥

इति पद्मपुराणात् ।

अत्र शिवस्य सशक्तेर्य उत्सवः पक्षद्वयगतायामष्टम्यां नवम्यां वा विहितः । स नवमीयुतायामष्टम्यामष्टमीयुतायां च कर्तव्य इत्येतावद्विवक्षितम् । "शिवक्षेत्रे" इति त्वनुवादः । शिवोत्सवस्य तत्रैव करणात् । अन्यथार्थवादः । एवं सति—

"उपवासे सप्तमी तु वेधाद्धन्त्युत्तरं दिनम् ।
पक्षयोरुभयोरेष उपवासविधिः स्मृतः ॥

इति नारदीयवचनमपि शिवशक्तिप्रीत्यर्थोपवासाभिप्रायमेव । एकमूलकल्पनालाघवात् । "एकादश्यष्टमी षष्ठी" ति पूर्वोदाहृत-वचनमप्येतद्विषयमेव । शुक्लपक्षविषयं वा । न त्विदं वचनद्वयमुपवासे कृष्णपक्षगतायाः सामान्यवचनप्राप्तं पूर्वविद्धत्वमपोद्य पक्षद्वयगताया अप्युत्तरस्या ग्राह्यत्वं प्रतिपादयतीति युक्तं । कृष्णाष्टम्याः पूर्वविद्ध-प्रतिपादके निगमवचने आहत्योपवासग्रहणात् ।

न चैतस्य—

रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः।

अन्येषु व्रतकल्पेषु यथोद्दिष्टामुपावसेत्" ॥

इत्येतद्वचनवशाद्रुद्रोपवासविषयत्वेनोपसंहारो युक्तः। "उपवासादिकार्येषु एष धर्मः सनातनः" इति सर्वविषयत्वस्य स्पष्टत्वात्। "रुद्रव्रतेष्वि" त्यस्य च रुद्रव्रतमात्रविषयत्वेनोपवासमात्रविषयत्वाभावात्समानविष्यत्वाभावात्।

तस्मात्—

"शुक्लाष्टमी परा ग्राह्या पूर्वा कृष्णाष्टमी मता।

कृष्णापि च महालक्ष्मीव्रतस्य तु समापने ॥

चन्द्रोदयगता ग्राह्या तादृशी चेद्दिनद्वये।

ग्राह्या पूर्वैव कृष्णात्वात्तादृश्यपि परेऽहनि ॥

चन्द्रोदयान्मुहूर्त्तेषु त्रिषु व्याप्त्या सती परा।

ज्येष्ठाव्रते तु ज्येष्ठायुक् पूर्वा वा यदि वा परा ॥

नक्षत्रमात्रापेक्षं यद्व्रतं ज्येष्ठात्र सा मता।

अष्टमीभानुवाराभ्यां युता यान्यतरेण वा ॥

अतथात्वे तु सोक्ता या मध्याह्नादूर्ध्वमप्यणुः।

दूर्वा शुक्लापि पूर्वैव कर्मकालं न सा स्पृशेत् ॥

ज्येष्ठामूलयुता वा चेद् ग्राह्या तद्रहिता परा।

कर्मकाले यदि भवेत् शिवशक्तिमहोत्सवे ॥

पक्षद्वयेऽप्युत्तरैव पूर्वा रुद्रव्रते तथा।

श्रीकृष्णजन्माष्टमी तु विशेषतो निर्णेष्यते। महाष्टमी च नवरात्रनिर्णये।

# अथ नवमीविवेचनम् ।

नवमी त्वष्टमीयुता ग्राह्या सर्वकार्येषु । "वसुरन्ध्रयोः" इति युग्मवचनात् । दशमीविद्धाया नवम्याः पद्मपुराणादौ निषेधाच्च ।

"नवम्येकादशी चैव दशाविद्धा[1] यदा भवेत् ।
तदा वर्ज्या विशेषेण गङ्गाम्भः सुरया यथा" ॥ इति ॥

श्रीरामनवमीव्रते तु मध्याह्नव्यापिनी ग्राह्या ।

"मेषं पूषणि संप्राप्ते लग्ने कर्कटकाह्वये ।
आविरासीत्स कलया कौशल्यायां परः पुमान्" ॥

इत्यगस्त्यसंहितावचने मध्याह्नस्य जन्मकालत्वाभिधानात् ।

जयन्तीषु च जन्मकालस्यैव पूजारूपकर्मकालत्वात् । जन्माष्टम्यां तथा दर्शनात् । अत एव स्पष्टमुक्तं "सैव मध्याह्नयोगेन महापुण्यतमा भवे" दिति । यदा दिनद्वयेऽपि मध्याह्नव्यापिनी तदस्पर्शिनी, तदेकदेशस्पर्शिनी वा । तदा या पुनर्वसुयुता सा ग्राह्या ।

"पुनर्वस्वृक्षसंयोगः स्वल्पोऽपि यदि दृश्यते ।
चैत्रशुद्धनवम्यां तु सा पुण्या सर्वकामदा" ॥

इत्यगस्तसंहितावचनात् ।

यदा तादृश्या दिनद्वयेऽपि पुनर्वसुयोगः । तदा या मध्याह्ने तद्योगवती सा ग्राह्या । जन्मकाले तद्योगस्य रोहिणीयोगवत्प्रशस्तत्वात् । यदा दिनद्वयेऽपि मध्याह्ने वर्त्तमानायास्तत्रैव पुनर्वसुयोगोऽपि, यदा वा दिनद्वयेऽपि मध्याह्ने तं विहाय वा वर्त्तमानायाः पुनर्वसुयोगः, तं विहायैव यदा वा, त्रिविधाया अपि पूर्वोक्तायाः सर्वथा पुनर्वसुयोगाभावः, तदोत्तरैव सर्वैर्ग्राह्या ।

(१)—दशाविद्धा दशमीविद्धेति भावः ।

"नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ।
उपोषणं नवम्यां वै दशम्यामेव पारणम्" ॥

इत्यगस्त्यसंहितावचनात् ।

अत्र च विष्णुपरायणैरित्युक्तत्वाद्वैष्णवैरष्टमीविद्धां त्यक्त्वा दशमीविद्धोपोष्या । अवैष्णवैस्त्वष्टमीविद्धैवेति केचिन्मन्यन्ते । तदयुक्तम् । विष्णुपरायणैः सद्भिरिदं सर्वं कर्तव्यमित्युपदेशपरत्वेनाप्येतस्य विशेषणस्योपपत्तौ । अवैष्णवानामष्टमीविद्धाविध्यापादककर्तृविशेषणत्वाङ्गीकारस्यानुचितत्वात् ।

वस्तुतस्तु "विष्णुपरायणै" रित्येतद्विष्णुपदस्य प्रकृतरामात्मकविष्णुपरत्वात्तन्मन्त्रदीक्षितपरं सद्गुणविधावपि श्रुतं । "तस्मिन्दिने तु कर्तव्यमुपवासव्रतं सदे" ति सदाशब्दयुक्ते नित्यप्रयोगविधावाकाङ्क्षितत्वादन्वेति प्रकृते । तेन सदाशब्दयोगात्प्रतीयमानं नित्यत्वमस्य व्रतस्य श्रीराममन्त्रदीक्षितान्प्रत्येव भवति ।

न तु—

"प्राप्ते श्रीरामनवमीदिने मर्त्यो विमूढधीः ।
उपोषणं न कुरुते कुम्भीपाकेषु पच्यते ॥
अकृत्वा रामनवमीव्रतं सर्वव्रतोत्तमम् ।
व्रतान्यन्यानि कुरुते न तेषां फलभाग्भवेत्" ॥

इत्यादिष्वकरणे दोषप्रतिपादनेन नित्यत्वावेदकेषु तत्रत्यवचनेषु मर्त्यादिसामान्यशब्दश्रवणेऽपि सर्वान्प्रति भवति । अत एव शिष्टाचारोऽपि तथा । न हि श्रीरामदीक्षाहीना अतिशिष्टा अपि सर्वे श्रीरामनवम्यामुपवासमाचरन्ति ।

"सूर्यग्रहे कुरुक्षेत्रे महादानैः कृतैर्मुहुः ।
यत्फलं तदवाप्नोति श्रीरामनवमीव्रतात्" ॥

इत्यादिवाक्यविहितः काम्यप्रयोगस्तु सर्वेषां भवति। न च नित्याधिकारविधाविव कामाधिकारविधावपि "विष्णुपरायणै" रित्यस्यान्वयोऽस्त्विति वाच्यम्। काम्यप्रयोगस्य खण्डतिथौ निषेधेन खण्डतिथिनिर्णयवाक्यानां नित्यप्रयोगविधिमात्रशेषत्वात्तदन्तर्गतस्य तस्य पदस्य तन्मात्रान्वयस्यैवोचितत्वात्। पारणं तु यदा पूर्वविद्धायामुपवासः। तदा नवमीमतिक्रम्यैव कर्तव्यम्। सामान्यवचनात्। "दशम्यामेव पारण" मिति विशेषणवचनाच्च। न चात्र रात्रिपारणादिप्रसक्तिरिति।

तदर्थं निर्णयः—

नवमी पूर्वविद्धैव सर्वकार्येषु शस्यते।
अलाभे परविद्धापि श्रीरामनवमीव्रते॥
मध्याह्नव्यापिनी पूज्या तद्व्याप्तिश्चेद्दिनद्वये।
एकदेशेऽपि वा व्याप्तिः सर्वथाऽसत्त्वमेव वा॥
पुनर्वसुयुता ग्राह्या तद्योगेऽपि दिनद्वये।
मध्याह्नतद्योगवती ग्राह्या तस्य प्रशस्तितः॥
दिनद्वयेऽपि तादृक्त्वे मध्याह्नं परिहृत्य वा।
ऋक्षयोगे सर्वथा वा तदसत्त्वे परा मता॥
पूर्वविद्धोपवासेऽपि दशम्यामेव पारणम्।
नित्यं चैतद्दीक्षितानां श्रीरामनवमीव्रतम्॥

## अथ दशमीविवेचनम्।

दशमी तु दिनद्वयेऽपि कर्मकालव्यापिनी पूर्वा, परा वेच्छया ग्राह्या।

"संपूर्णा दशमी कार्या परया पूर्वयाथवा।
युक्ता न दूषणं तस्यां यतः सा सर्वतोमुखी"॥

इति स्कन्दपुराणवचनात्।

संपूर्णा कर्मकाले । विशेषाश्रवणाद्दिनद्वयेऽपि । अन्येषु पक्षेषु पूर्वा । "दशमी चैव कर्तव्या सदुर्गा द्विजसत्तमे" ति स्कन्दपुराण एवोक्तत्वादिति हेमाद्रिप्रभृतयः ।

न च दिनद्वये कालव्याप्तौ शुक्लकृष्णवाक्याभ्यां व्यवस्था कुतो नाभ्युपगम्यत इति वाच्यम् । तथा सति "परया पूर्वयाथवे"ति वचनस्यानर्थक्यात् । कर्मकालव्याप्तिशुक्लकृष्णवाक्यैरेवास्यार्थस्य सिद्धेः । ऐच्छिकविकल्पविधानार्थमेव हि तद्वचनम् । अत्र तु "संपूर्णा इति विख्याता" इत्युक्तसंपूर्णत्वस्यैव कार्यकाले संज्ञापरिभाषयोरुपस्थानमिति न्यायेन ग्रहीतुं युक्तत्वात्कर्मकालविषयम् । तच्चिन्त्यम् । तस्मान्माधवाद्युक्ता शुक्लकृष्णभेदेनैव व्यवस्था कालव्याप्त्यनिर्णयपक्षेषु ज्यायसी । "संपूर्णे"ति वाक्यं त्वेवं व्याख्येयम् । दशमी संपूर्णा कार्या । अथ पूर्वया परया वा तिथ्या युक्ता कार्या । सर्वकार्येषु तस्यां कस्यांचिदपि गृहीतायां न दूषणम् । यतः सा सर्वतोमुखी । अन्यासां हि तिथीनां सामान्यवचनाद्विविशेषवचनाद्वा मूलं पित्र्यादिकर्मयोग्यम् । तथैवाग्रमुपवासादिदैवकर्मयोग्यमस्यास्तु । सर्वं सर्वत्र योग्यमिति । संपूर्णाग्रहणाद्दृष्टान्तत्वेन सर्वतोमुखीत्यर्थवादोपपत्तये । एवमुक्ते शुक्लकृष्णवाक्याभ्यां व्यवस्था । एतादृशविषय एव हि तयोर्व्यवस्थापकत्वेनार्थवत्ता । एवं सति—

"नन्दाविद्धा तु या पूर्णा द्वादशी मकरे सिता ।
भृगुणा नष्टचन्द्रा च एता वै निःफलाः स्मृताः" ॥

इति कूर्मपुराणगतउत्तरविद्धानिषेधः पूर्वोक्तश्च ।

नवमीयुक्तविधिः कृष्णपक्षविषयो द्रष्टव्यः । यश्च—

"नागविद्धा तु या षष्ठी शिवविद्धा च सप्तमी ।
दशम्येकादशीविद्धा नोपोष्याः स्युः कथंचन" ॥

इत्यादिर्विशेषत उपवासे परविद्धानिषेधः शिवरहस्यसौरपुराणादिषु । सोऽपि तथा । उपवासे पूर्वविद्धाया एव नियमे सर्वतो मुखत्वोक्तिविरोधापत्तेः । उपवासग्रहणं तु मुख्यतया सर्वकर्मोपलक्षणमेव युक्तम् । इतरतिथ्यनुरोधेन तस्मिंस्तस्यावश्यकत्वात् । तस्मात् सर्वकार्येषु दशमी कृष्णा पूर्वा, उत्तरा सिता ।

## अथैकादशीविवेचनम् ।

एकादशी तु सर्वकार्येषु द्वादशीयुता ग्राह्या । "रुद्रेण द्वादशीयुक्ते" ति युग्मवचनात् । "एकादशी न कर्तव्या दशमीसंयुता विभो" इति स्कन्दपुराणवचनेन,

"पूर्वविद्धा न कर्तव्या तृतीया षष्ठीरेव च ।
अष्टम्येकादशी भूता धर्मकामार्थवाञ्छिभिः" ।

इति भविष्यत्पुराणवचनेन च पूर्वविद्धानिषेधाच्च ।

उपवासे त्वेकादशी विशेषतो निर्णेष्यते ।
एकादशी परयुता सर्वकार्येषु संमता ॥

## अथ द्वादशीविवेचनम् ।

द्वादश्यप्येकादशीयुतैव ग्राह्या सर्वकार्येषु । युग्मवचनात् । "द्वादशी च प्रकर्तव्या एकादश्या युता प्रभो" इति स्कन्दपुराणवचनाच्च । उपवासे तु विशेषतः ।

"एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः" ॥

इति गार्ग्यप्रोक्तविधिवचनात् ।

"द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी" ॥

इति वासिष्ठोत्तरविद्धानिषेधवचनाच्च ।

एवं सति यदा खण्डतिथित्वादेकादशीद्वादश्युपवासावेकस्मिन् दिने प्राप्नुतः। तदोपक्रमप्रभृतितन्त्रेणैव कर्त्तव्यौ। यदा त्वखण्डतिथित्वाद्दिनद्वये नैरन्तर्येण प्राप्नुतः। तदा प्रक्रान्तद्वादश्युपवासेन प्रधानभूतद्वादश्युपवासानुरोधेनैकादश्युपवासाङ्गं पारणं बाधित्वा नैरन्तर्येणोपवासद्वयमपि कर्तव्यम्।

"एकादशीमुपोष्यैव द्वादशीं समुपोषयेत्।
न तत्र विधिलोपः स्यादुभयोर्दैवतं हरिः"॥

इत्युपोद्वलकस्मृत्यन्तरवचनाच्च।

अनुपक्रान्तद्वादश्युपवासेन तु सावकाशत्वात्तादृशे विषये द्वादश्युपवासो नोपक्रमितव्य एव। माधवस्तु "अपोऽश्नाति तन्नैवाशितं नैवानशित" मिति[१] दर्शपूर्णमासप्रकरणगतार्थवादवशादप्प्राशनस्याशितरूपत्वेन पूर्वोपवाससमापकत्वादनशितरूपत्वेन चोत्तरोपवासाविघातकत्वादुदकपारणां कृत्वानुपक्रान्त उपक्रान्तो

---

(१)—दर्शपौर्णमासे व्रतविसर्जनविधेरिदं स्वरूपम्—

ननु—यद्गुरशनस्य दोषावहत्वात्, अनशने च व्रतसमाप्त्यभावात्, किंकर्तव्यताविमूढत्वमिति चेन्न। "यद् द्रव्यमशितमप्यनशितवद्भवति। तदश्नीयात्"। तच्च प्राश्यद्रव्यमारण्यम्। अत्रारण्यग्रहणं प्रकृतदर्शपूर्णमासहविर्व्यतिरिक्तोपलक्षणमिति सायणाचार्याभिप्रायः। शतपथब्राह्मणान्तर्गते "अथातोऽशनानशनस्यैव" इत्यारभ्य "...तस्मादारण्यमेवाश्नीयात्" इत्यन्तकण्डिकाभाष्ये (१ प्रपा० १ ब्रा० ६—१०)

आपस्तम्बश्रौतसूत्रे तु—

"आरण्यं सायमाशेऽश्नात्यमाषममांसम्"। (४ प्र० ३ क० ७)

"न तस्य सायमश्नीयाद् येन प्रातर्यक्ष्यमाणः।
आरण्यायोपवत्स्यन्नपोऽश्नाति न वा"। इति (४ प्र० ३ क० १०-११)

सायंकाले आरण्यमरण्ये भवमन्नं नीवारादि आशस्थानेऽश्नाति। यज्जातीयेन हविषा श्वो यष्टा तज्जातीयं द्रव्यं नाश्नीयात्। आरण्येनैव हविषा श्वो यष्टा यस्तस्य नास्त्यारण्याशनम्। किन्त्वपोऽशनम्। अशनाभावो वेति रुद्रदत्तीयव्याख्या।

वा द्वादश्युपवासः कर्तव्य" इत्याह । अन्यतिथिष्वप्युपवासद्वयस्य नैरन्तर्येण प्राप्तावयमेव निर्णयः । अवशाद्द्वादशी निर्णेष्यते ।

तस्मात्—

उपवासादिकार्येषु द्वादश्येकादशीयुता ।
उपवासद्वयप्राप्तावेकस्मिन्नह्नि तन्त्रता ॥
नैरन्तर्येण तत्प्राप्तावुपवासद्वयं भवेत् ।
अकृत्वैव च पूर्वस्य पारणां प्राश्य वोदकम् ॥

## अथ त्रयोदशीविवेचनम् ।

त्रयोदशी तु कृष्णा उत्तरा ग्राह्या ।

"षष्ठ्यष्टमी त्वमावास्या कृष्णपक्षे त्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वयुतास्तथा" ॥

इति निगमवचनात् ।

एवं सति "त्रयोदशी प्रकर्तव्या द्वादशीसहिता मुने" इति ब्रह्मवैवर्त्तवचनस्य सामान्यविशेषन्यायेन शुक्लत्रयोदशीविषयत्वाच्छुक्ला पूर्वा । उपवासेऽप्येवमेव । न च—

"एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
त्रयादशी अमावास्या उपोष्याः स्युः परान्विताः" ॥

इति विष्णुधर्मोत्तरवचनादुपवासे पक्षद्वयगताप्युत्तरैव युक्तेति वाच्यम् ।

"द्वितीया पञ्चमी वेधा" दिति वृद्धवशिष्ठवचनेनोपवास एवोत्तर-विद्धाया निषेधादपि तत्र व्यवस्थापेक्षायां "कृष्णपक्षे त्रयोदशी" ति

कर्मविषये सामान्यवचनेनाप्यवगतायाः कृष्णशुक्लविषयत्वेन व्यवस्थायाः स्वीकारस्योपवासेऽपि युक्तत्वात्। या च शुक्लत्रयोदशी पूर्वा ग्राह्या। सा न सायाह्नमात्रव्यापिनी। किं तु यद्यापराह्णिक्यपि। "त्रयोदशी प्रकर्तव्या भवेद्या वापराह्णिकी" ति स्कन्दपुराणात्। अत एव माधवेनोक्तं "या शुक्ला गृह्यते पूर्वा गृह्यतां सापराह्णिकी"ति। अनङ्गत्रयोदशी त्वनापराह्णिक्यपि पूर्वा ग्राह्या।

"कृष्णाष्टमी बृहत्तापा सावित्रीवटपैतृकी।
अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः" ॥

इति विशेषवचनस्यैवं सार्थक्यात्।

"मार्गशीर्षेऽमले पक्षे" इति शुक्लपक्षगतत्वेन तस्या अपि पूर्वविद्धत्वस्य सामान्यवचनादेव सिद्धत्वात्।

केचित्तु शुक्ला त्रयोदशी "शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः" इति वचनान्न पौर्वाह्णिकी उत्तरविद्धा ग्राह्या। किन्त्वापराह्णिकी पूर्वविद्धेति द्वेधाविभागाङ्गीकारेणापराह्णिकवचनं व्याचक्षते। तेषामनङ्गत्रयोदशीपूर्वविद्धत्ववचनस्य प्रयोजनं चिन्त्यम्। कृष्णापि त्रयोदशी यदा परदिने न लभ्यते। तदा पूर्वापि ग्राह्या। सामान्यवचनात्।

"एकादशी तृतीया च षष्ठी चैव त्रयोदशी।
पूर्वविद्धा तु कर्तव्या यदि न स्यात्परेऽहनि" ॥

इति विशेषवचनाच्च।

उपवासादिकार्येषु पूर्वा शुक्लत्रयोदशी।
यद्यापराह्णिकी स्यात्तु परा कृष्णात्रयोदशी ॥
अलाभे सापि पूर्वैव पूर्वानङ्गत्रयोदशी।
सायाह्नमात्रसत्त्वेऽपि तादृश्यन्या परा स्मृता ॥

इति निर्णयः।

# अथ चतुर्दशीविवेचनम्।

चतुर्दशी तु शुक्ला परा ग्राह्या। "चतुर्दश्या च पूर्णिमे"ति युग्मवाक्यात्।

"सदा कार्या त्रयोदश्या न तु युक्ता चतुर्दशी।
पौर्णमासीयुता सा स्याच्चतुर्दश्या च पूर्णिमा"॥

इति भविष्यत्पुराणाच्च।

कृष्णचतुर्दशी तु पूर्वविद्धा ग्राह्या।

"कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी।
पूर्वविद्धैव कर्तव्या परविद्धा न कुत्रचित्॥
उपवासादिकार्येषु एष धर्मः सनातनः"।

इत्यापस्तम्बवचनात्। उपवासे तु पक्षद्वयगतापि परैव ग्राह्या।

"एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्दशी।
अमावास्या तृतीया च ता उपोष्याः परान्विताः"॥

इति वृद्धवशिष्ठवचनात्।

यत् "तूपवासादिकार्येष्वि" त्युपवासे कृष्णचतुर्दश्याः पूर्वविद्धत्वाभिधानम्। तद्रुद्रोपवासविषयम्। शैवव्रते पक्षद्वयगताया अपि चतुर्दश्या आपराह्णिक्याः पूर्वविद्धाया ग्राह्यत्वात्।

"चतुर्दशी तु कर्तव्या त्रयोदश्या युता विभो।
मम भक्तैर्महाबाहो भवेद्या चापराह्णिको॥
दर्शविद्धा न कर्तव्या राकाविद्धा तथा मुने"

इति स्कन्दपुराणात्।

"मम भक्तै" रितीश्वरोक्तिलिङ्गादस्य शिवव्रतविषयत्वम्। "रुद्र-व्रतेषु सर्वेषु कर्तव्या संमुखी तिथि" रिति वचनाच्च। आपराह्णिक्या अलाभे तु शिवव्रतेऽपि परैव। "ता उपोष्याः परान्विताः" इति सामान्यवचनात्।

कृष्णचतुर्दश्यपि पूर्वविद्धाया अलाभे परैव। एतद्विषयाण्येव—

"अष्टम्येकादशी षष्ठी कृष्णपक्षे चतुर्दशी।
अमावास्या तृतीया च कर्तव्या परसंयुता"॥
"चतुर्दशी दर्शयुक्ता पौर्णमास्या युता तथा"

इत्यादीनि ब्रह्मवैवर्त्तनारदीयादिवचनानि रुद्रोपवासविषयाणि चापराह्णिक्याः पूर्वस्या अलाभे। दमनकपवित्रारोपणयोस्तु शुक्ले अपि चैत्रश्रावणचतुर्दश्यौ रात्रियोगिन्यौ पूर्वे एव ग्राह्ये। न तूत्तरे।

"मधोः श्रावणमासस्य शुक्ला या तु चतुर्दशी।
सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनी"॥

इति बौधायनवचनात्।

परा मासान्तरगता शुक्लचतुर्दशी पूर्वाह्णगामिनी उत्तरविद्धेत्य-नुवादः। भाद्रपदशुक्लचतुर्दश्यां विहितेऽनन्तव्रते पूजितचतुर्दशग्रन्थि-युतदोरकबन्धनप्रधानके यद्यपि

"मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे।
ददर्श शीला सा स्त्रीणां समूहं रक्तवाससम्।
चतुर्दश्यामर्च्चयन्तं भक्त्या देवं पृथक्पृथक्"॥

इति भविष्योत्तरवचने,

मध्याह्ने पूर्वगृहीतव्रतानां स्त्रीणां व्रताचरणप्रतीतेः शीलाया-

आपूर्वव्रतारम्भप्रतीतेस्तस्य मध्याह्नकालत्वान्मध्याह्नव्यापिनी चतुर्दशी ग्राह्येति प्रतिभाति। तथापि पूजादिविधेः स्पष्टत्वेनेतिहासरूपार्थवादोन्नेयत्वाभावात्तत्र च मध्याह्नाश्रवणात्प्रत्यक्षविधिविहितदैवकर्माङ्गपूर्वाह्णविरोधेन चार्थवादात्तन्मात्रविधेः कल्पनासंभवात्पूर्वाह्ण एव तस्यापि काल इति तद्व्यापिन्युत्तरैव तिथिस्तत्र ग्राह्या। शिष्टाचारोऽप्येवमेव। शिवरात्रिचतुर्दशी वक्ष्यते।

तस्मात्—

कृष्णा चतुर्दशी पूर्वा परा शुक्लचतुर्दशी।
उपवासे तूत्तरैव पक्षद्वयगतापि सा॥
रुद्रोपवासे पूर्वैवोभयी यद्यापराह्णिकी।
अतादृशी सापि परा कृष्णाप्याद्येऽसती तथा॥
चैत्रश्रावणगा शुक्ला रात्रियोगवती मता।
ग्राह्यानन्तव्रते शुक्ला परैवान्यव्रतेष्विव॥

## अथ पञ्चदशीविवेचनम्।

पञ्चदशी तु पौर्णमासी अमावास्या च सावित्रीव्रतातिरिक्ते सर्वत्रोपवासादौ कार्ये परविद्धैव ग्राह्या।

"भूतविद्धा न कर्तव्या दर्शः पूर्णा कदाचन।
वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम्" ॥

इति ब्रह्मवैवर्त्तवचनात्।

एवं सति यत्पौर्णमास्याः पूर्वविद्धाया विधायकं "चतुर्दश्या च पूर्णिमे"ति युग्मवचनम्, परविद्धाया निषेधकं च "पूर्णिमा परविद्धा च नोपोष्यं तिथिपञ्चक"मिति ब्रह्मपुराणम्, यच्चामावास्यायाः पूर्वविद्धाया विधायकम्—

"दर्शं च पूर्णमासं च पितुः साम्वत्सरं दिनम्।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते" ॥

इति नारदीयपुराणम्, तत्सर्वं सावित्रीव्रतविषयम्।

यानि चामावास्यायाः परविद्धाया विधायकानि—

"प्रतिपद्यप्यामावास्ये" ति युग्मवाक्यम्,

"षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे त्रयोदशी।
एताः परयुताः पूज्याः पराः पूर्वान्वितास्तथा"

इति पद्मपुराणम्,

"नागविद्धा तु या षष्ठी सप्तम्या च तथाष्टमी।
दशम्येकादशीविद्धा त्रयोदश्या चतुर्दशी" ॥
"भूतविद्धा त्वमावस्या न ग्राह्या मुनिपुङ्गव।
उत्तरोत्तरविद्धास्ताः कर्त्तव्याः काठकी श्रुतिः" ॥

इति प्रचेतोवचनं च,

यच्चोभयोरपि पौर्णमास्यमावास्ययोः परविद्धयोर्विधायकम्—

"एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी।
अमावास्या तृतीया च ता उपोष्याः परान्विताः" ॥

इति विष्णुधर्मोत्तरम्,

तानि सावित्रीव्रतातिरिक्तविषयाणि। वचनेनव विरुद्धानां व्यवस्थाकरणात्। अत एवोपवासग्रहणमपि क्वाचित्कमुपलक्षणमेव। सावित्रीव्रते उभयोरपि पूर्वविद्धयोर्विधायकं निगमवाक्यमपि—

"कृष्णाष्टमी बृहत्तापा सावित्रीवटपैतृकी।
अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः"—इति ॥

सावित्री सावित्रीव्रतसम्बन्धिनी पौर्णमासी वटपैतृकी । तद्-व्रतसम्बन्धिन्यमावास्या । तत्रैव परविद्धयोर्निषेधकं ब्रह्मवैवर्त्तं च—

"प्रतिपत्पञ्चमी भूता सावित्रीवटपूर्णिमा ।
नवमी दशमी चैव नोपोष्याः परसंयुताः"—इति ॥

सावित्री तद्व्रतसम्बन्धिन्यमावास्या ।
इदं च पूर्वविद्धयोः पञ्चदश्योः कर्तव्यत्वेनोक्तमपि सावित्रीव्रतं नवमुहूर्त्तात्मकचतुर्दशीविद्धयोर्न कर्तव्यम् । "भूतोऽष्टादशनाडीभिर्दू-षयन्त्युत्तरां तिथिं"--मिति विशेषवचनादिति माधवः ।

वस्तुतस्तु यद्भूत उत्तरां तिथिं दूषयति तदष्टादशनाडीभिरिति । यत्र भूतविद्धा निषिद्धा तत्रैवायं विशेषविधिः । "भूतविद्धा न कर्तव्ये"त्यस्य शेषो लाघवादिति सावित्रीव्रते एतस्य प्रवृत्तिर्न युक्ता । किन्तु इतरव्रतेष्वेव । त्रिमुहूर्त्तात्मकसामान्यवेधबाधेन । सापि कर्म-कालव्याप्तिशास्त्रौदासीन्य इति । उपाकर्मणि श्राद्धे च पौर्णमास्य-मावास्या च निर्णेष्यते ।

तस्मात्—

पूर्वविद्धैव सावित्रीव्रते पञ्चदशी तिथिः ।
नाड्योऽष्टादश भूतस्य न स्युश्चेदिति माधवः ॥
तद्भिन्ने तूपवासादौ मुहूर्त्तनवकेन चेत् ।
चतुर्दश्या युता, तां तु त्यक्त्वा ग्राह्या परान्विता ॥
तत्रैव कालव्याप्तौ तु सापि ग्राह्येति निर्णयः ।

एवं प्रतिपदादिपञ्चदश्यन्तास्तिथयः सामान्यत उपवासे प्रस-ङ्गात्तद्भिन्नेऽपि क्वचित् कृत्ये निर्णीताः ।

# अथ कृष्णजन्माष्टमीविवेचनम् ।

इदानीं काश्चित्तिथयो विशेषत उपवासादिषु निर्णीयन्ते ॥

तत्र श्रीकृष्णजन्माष्टमी तावद्व्रते निर्णीयते । सा च पौर्णमास्यन्तमासपक्षे भाद्रपदे, दर्शान्तपक्षे श्रावणे, कृष्णाष्टमी ।

यद्यपि च—

तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च ।
विवाहादौ च सौरादिं मासं कृत्ये विनिर्दिशे" दिति—

ब्रह्मपुराणादत्र तिथिकृत्यत्वात्पौर्णमास्यन्तमासग्रहणमेवोचितम् । तथाप्यत्रोभयमासव्यवहारदर्शनादुभयत्रापि च पौर्णमास्यन्तग्रहणे तिथिभेदापत्त्या मूलश्रुतिद्वयकल्पनापत्तेः । श्रावण्यनन्तरायामेकस्यामेव च रोहिणीयोगसंभवात् सर्वैश्च शिष्टैरेकस्यामेव तिथौ व्रताचरणाद् द्विविधेनापि व्यवहारेणैकैव तिथिरुपलक्ष्यत इति युक्तम् । एवमेवंजातीयकेऽन्यत्रापि द्रष्टव्यम् ।

यत्र त्वेकेनैव मासेन व्यवहारः । तत्र प्रायेण तिथिकृत्ये कृष्णादिर्द्रष्टव्यः । सा च प्रथमं तावद् द्विविधा शुद्धा विद्धा च । तत्र सप्तमीयोगरहिता शुद्धा तद्वती विद्धा । न चात्र वेध्याया अष्टम्यास्तिथ्यन्तरवद्दिवाप्रवेशे सत्येव वेधः । किं तु रात्रिमात्रसत्त्वेऽपि सप्तमीवेधो भवत्येव । पूजारूपस्य प्रधानस्यार्द्धरात्रसाध्यत्वात् ।

"अहस्सु तिथयः पुण्याः कर्मानुष्ठानतो द्विजाः ।
नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते" ॥

इति वचनाद् रात्रिवेधं वदतां माधवादीनामयमेवाभिप्रायः ।

यदपि—

"त्रिकालं पूजयेद्देवं दिवा रात्रौ विशेषतः ।
अर्द्धरात्रावपि तथा पुष्पैर्नानाविधैरपि" ॥

इति भविष्ये अन्यकालेऽपि पूजोक्ता । उपवासश्चाहोरात्रावच्छिन्नाभोजनरूपस्तथाप्यर्द्धरात्रकालावच्छिन्नैव पूजा प्रधानम् ।

"रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी ।
सप्तम्यामर्द्धरात्राधः कलयापि यदा भवेत् ॥
तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः ।
तमेवोपवसेत्कालं तत्र कुर्याच्च जागरम्" ॥ इति,
"अर्धरात्रे तु योगोऽयं तारापत्युदये तथा ।
नियतात्मा शुचिः स्नातः पूजां तत्र प्रवर्त्तयेत्" ॥

इति च विष्णुधर्मोत्तरात्,

"अर्द्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥
सोपवासो हरेः पूजां कृत्वा तत्र न सीदती" ति—

भविष्यपुराणाच्च ।

वशिष्ठेन तु स्पष्टमेवार्द्धरात्रस्य मुख्यकालत्वमुक्तम् ।
"अष्टमी रोहिणीयुक्ता निश्यर्द्धे दृश्यते यदि ।
मुख्यकालः स विज्ञेयस्तत्र जातो हरिः स्वयम्" ॥ इति ।

मुख्यस्य प्रधानस्य कालो मुख्यकालः ।

अत एव पूजाया अपि प्राधान्यम् । केवलोपवासप्राधान्ये तस्याहोरात्रसाध्यत्वेनार्द्धरात्रस्य तदपेक्षया मुख्यकालत्वानुपपत्तेः । फलसम्बन्धश्रवणाच्च । एवं च सति "उपवासस्य नियमं गृह्णीयात्" इत्युक्त्वा—

"वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये ।
उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम्" ॥

इति भविष्योक्ते संकल्पवाक्ये यदुपवासमात्रग्रहणम् । तत्पूजाया अप्युपलक्षणम् । विध्यनुसारित्वात्संकल्पस्य । एवं सति वासुदेवं समुद्दिश्येत्यप्यन्वेति । पूजायां तस्योद्देश्यत्वात् । उपवासे उदेश्यानपेक्षणात् । वासुदेवशब्देन तत्प्रीतिलक्षणायां च तदपेक्षया जघन्ये उपवासपद एव यथाश्रुततदन्वयार्थं पूजालक्षणाया युक्तत्वात् । उपवासोपसर्जनकपूजालक्षणायाश्च "वासुदेवं समुद्दिश्ये" त्यस्य विशेष्यपूजान्वयोपपत्तेः । "सोपवासो हरेः पूजा" मित्यत्रोपवासस्य पूजोपसर्जनत्वदर्शनात् । एतादृशविशेषणत्वेन च प्राधान्यं न विहन्यते । यजतावुद्देशवत् । अत एव द्वितीयसंकल्पवाक्ये "अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनी" ति पूजाया अप्युल्लेखः । तेनोपवासरूपस्य प्रधानस्याहोरात्रसाध्यत्वेऽपि पूजारूपस्य प्रधानस्यार्द्धरात्रसाध्यत्वादेतस्य रात्रिमात्रसत्त्वेऽप्यष्टम्याः सप्तमीवेधो भवतीति ।

एवं स्पष्टैर्विशेषवचनैः कृष्णाष्टमीव्रतपूजाया रात्रिकालत्वे सति यद्दैवत्वेन सामान्यतो विहितं पूजायाः पौर्वाह्णिकत्वमुपवासस्य च तदङ्गत्वमभिप्रेत्योदयकालीनाया अष्टम्या ग्राह्यत्वं मैथिलैरुच्यते । तत्साहसमात्रम् ।

शुद्धविद्धभेदेन द्विविधाप्यष्टमी प्रत्येकं द्विविधा । द्वितीयदिने सूर्योदयमतिक्रम्य सती असती चेति । तादृश्यपि पुनः प्रत्येकं द्विविधा । रोहिणीसहिता तद्रहिता चेति । तत्र शुद्धायां विद्धायां वा सूर्योदयादूर्ध्वमसत्यां रोहिणीसहितायां तद्रहितायां वा विप्रतिपत्तिरेव नास्ति । द्वितीयदिनेऽष्टम्यभावात् । शुद्धाधिकाया विद्धाधिकाया वा रोहिणीसाहित्यस्यान्यतरस्मिन्नेव दिने द्वयोरपि चेति द्वैविध्ये सति आद्यपक्षे यैव रोहिणीयुता सैव ग्राह्या ।

"प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी।
मुहूर्त्तमपि लभ्येत सोपोष्या सा महाफला॥
मुहूर्त्तमप्यहोरात्रे यस्मिन्युक्तं हि लभ्यते।
अष्टम्यां रोहिणीऋक्षं तां सुपुण्यामुपावसेत्"॥

इति विष्णुरहस्यवचनात्।

तेनोत्तरदिन एव रोहिणीयोगे निशीथव्यापिनीमपि, किं बहुना, शुद्धामपि पूर्वां परित्यज्योत्तरैव जन्माष्टमी व्रते ग्राह्या। यत्त्वेतादृशे विषये पूर्वेद्युरेव केषांचिच्छिष्टानामपि व्रताचरणम्। तदाग्रहमात्रम्। वह्निपुराणेऽपि—

"कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी नृप।
जयन्ती नाम सा ज्ञेया उपोष्या: सा प्रयत्नतः॥
सप्तजन्मकृतं पापं राजन्यत्त्रिविधं नृणाम्।
तत् क्षालयति गोविन्दस्तिथौ तस्यां सुभावितः"॥ इति।

कृष्णाष्टम्यां कृष्णजन्माष्टम्याम्।

"द्वादशस्वपि मासेषु कृष्णपक्षाष्टम्यां रोहिणीयोगे जयन्तीव्रत" मिति तु द्वैतनिर्णयोक्तिर्भ्रान्तिमूलिकैव।

"सिंहार्के रोहिणीयुक्ता नराः कृष्णाष्टमी यदि।
रात्र्यर्द्धपूर्वापरगा जयन्ती कलयापि च"॥

इति वराहसंहितायां सिंहार्कग्रहणात्।

मासान्तरे रोहिणीयोगस्य! सर्वथैवासंभवाच्च। अत्राष्टम्या रोहिणीमात्रयोगे जयन्तीत्वमिति दाक्षिणात्याः। अर्द्धरात्र एव तद्योगे जयन्तीत्वमिति तु गौड़ाः। जयन्तीव्रतं जन्माष्टमीव्रताद्भिन्नं वा। तत्रैव फलविशेषाय दाक्षायणयज्ञादिवत्प्रकारभेदमात्रं वेति तु न

विचार्यते। अनुपयोगात्। भेदवादिनोऽप्युभयसंनिपाते जयन्तीव्रत-मात्रानुष्ठानस्यैव संमतत्वात्।

ननु चार्धरात्रस्य कर्मकालत्वं तावत्स्थितम्। कर्मकालव्याप्ति-शास्त्रस्य च सर्वापेक्षया बलवत्त्वमुपपादितमेव। रोहिणीयोगे तु प्राशस्त्यात्फलातिशयमात्रम्। न तु तस्य निर्णयोपयोगिता। नवमी-बुधवारादियोगवत्। अन्यथा—

"प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः।
यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता॥
किं पुनर्बुधवारेण सोमेनापि विशेषतः।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा"॥

इति पद्मपुराणवचनात्पूर्वेद्युरर्द्धरात्रे वर्त्तमानां रोहिणीयुक्तामपि अष्टमीं विहाय बुधवारादियुक्ता परा कर्तव्या स्यात्। अथवा "मुहूर्त्तमपि लभ्येते" ति विष्णुरहस्यवचने निशीथात्मक एव मुहूर्त्तो ग्राह्यः। निशीथस्य रात्र्यष्टममुहूर्त्तात्मकत्वात्। अत एवोक्तं माधवो-दाहृते योगीश्वरवचने—

"अर्धरात्रादधश्चोर्ध्वमेकार्धघटिकान्विता।
रोहिणी चाष्टमी ग्राह्या उपवासव्रतादिषु"॥ इति॥

एका चार्द्धघटिका चैकार्द्धघटिके ताभ्यामन्विता। अत्राद्यपक्षे क्षणात्मकार्द्धरात्रादध उपरि चैकैकघटिकाव्याप्त्या निशीथव्याप्ति-र्लभ्यते। वह्निपुराणवाक्येऽपि कला अर्द्धरात्रगतैव ग्राह्या।

"अर्द्धरात्रादधश्चोर्ध्वं कलयापि यदा भवेत्।
जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी"॥

इति योगीश्वरेणैवाभिधानात्।

तथा चार्द्धरात्रे मुहूर्त्तसत्त्वं मुख्यः पक्षः। एकघटिकासत्त्वं मध्यमः। कलामात्रसत्त्वमधमः। अत एव वचनान्तरमपि "रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुता" मिति, "तारापत्युदये तथे"ति च। "उदये चाष्टमी किञ्चिन्नवमी सकला यदि" इति स्कन्दपुराणवचनेऽप्युदयशब्देन चन्द्रोदय एव ग्राह्यः। पूर्ववचनैकवाक्यत्वात्।

तेन विद्धाधिका पूर्वेद्युरेव निशीथे वर्त्तमाना, उत्तरदिन एव रोहिणीयुक्तापि पूर्वेद्युरेव ग्राह्या।

शुद्धाधिका तु सुतरां कर्मकालव्यापित्वात्संपूर्णत्वादिबहुगुणयोगाच्चेति कथमाग्रहमात्रं तद्ग्रहणं शिष्टानामिति।

अत्रोच्यते। कर्मकालव्याप्तिशास्त्रादेव प्रधानभूताया अष्टम्या एवार्द्धरात्रसत्त्वेन प्राप्तं ग्राह्यत्वम्।

"दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला।
रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम्" ॥

इति वचनेन रोहिणीयोगाभावविषयं क्रियते।

एवं हि तस्यार्थः। दिनावच्छेदेन रात्र्यवच्छेदेन वा कलामात्रापि चेद्रोहिणी अष्टम्यां नास्ति तदैव चन्द्रोदयसंयुतामर्धरात्रव्यापिनीमिति यावत् प्रकुर्वीत। दिनद्वयेऽपि तादृश्या अभावे बहुरात्रिसंयुतामुत्तरां प्रकुर्वीतेति। विष्णुरहस्यादिगतं मुहूर्त्तादिपदमर्द्धरात्रगततत्परमिति त्वत्यन्ताशुद्धम्। तथात्वे वाक्यस्यैवानर्थक्यप्रसङ्गात्। यदा हि शुद्धाप्यष्टम्यर्द्धरात्रे वर्त्तमाना ग्राह्या तदा रोहिणीसहिता सुतरामिति किं वचनेन। "मुहूर्त्तमप्यहोरात्रे" इति वचने तु स्पष्टैवाहोरात्रसम्बन्धियत्किञ्चिन्मुहूर्त्तप्रतीतिः। "उदये चाष्टमी किञ्चिन्नवमी सकला यदी" त्यत्र च सूर्योदयप्रतीतिः। तेन रोहिणीरहिताया निशीथव्यापिन्या अपवादेन निर्णायक एव रोहिणीयोगो न तु बुधवारादिवत्प्राशस्त्यमात्रहेतुरित्यपि युक्तम्। तदैव "रात्रियुक्तां प्रकुर्वीत" "तामुपावसेत्"

"उपोष्या सा प्रयत्नतः" इत्यादिषु निर्णायकत्वस्यैव प्रतीतेः। बुधवारादियोगवाक्येषु तु प्राशस्त्यमात्रप्रतीतेः।

एवं सति यदाचार्यचूड़ामणेः परदिन एव स्वल्पाप्यष्टमी रोहिणीयुता चेत्सर्वापवादिका परैवोपोष्येत्येतत्पक्षप्रदर्शनावसरे बुधसोमवारयोरप्युपादानम्, "उदये चाष्टमी किञ्चिदि" त्यस्य ब्रह्मवैवर्त्तवाक्यस्य, "प्रेतयोनिगताना" मिति पद्मपुराणवचनस्य च, तत्र प्रमाणत्वाभिधानम्। तदयुक्तमेव। अत एव तिथितत्त्वकृतापि—

"प्रजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी।
मुहूर्त्तमपि लभ्येत सैवोपोष्या महाफला" ॥ इति—
"वासरे वा निशायां वा यत्र युक्ता तु रोहिणी।
विशेषेण नभोमासि सैवोपोष्या सदा तिथिः" ॥

इत्यादि वचनेषु चकारश्रवणात्—

"एकादशीव्रताद्राजन्नधिकं रोहिणीव्रतम्।
ततो हि दुर्लभां मत्वा तस्यां यत्नं समाचरेत्" ॥

इति ब्रह्मपुराणे च जन्माष्टमीव्रतस्य रोहिणीव्रतत्वेनैव श्रवणात्तिथिद्वैधे रोहिणी नियामिकैव। बुधवारादियोगे तु गुणफलमात्रमित्युक्त्वा "षष्टिदण्डामप्यष्टमीं रोहिणीरहितां परित्यज्य रोहिणीसहिता स्वल्पाप्यष्टमी परैवोपोष्ये" ति स्पष्टमुक्तम्। दाक्षिणात्यनिबन्धेष्वपि सर्वेषु इत्थमेव निर्णयः।

या तु शुद्धाधिका पूर्वदिने निशीथे तद्विहाय वा रोहिणीयुक्ता, उत्तरदिने च तद्युक्ता, दिनद्वयेऽपि वा रोहिणीरहिता, सा पूर्वैवोपोष्या। सकलाहोरात्रव्यापित्वात्। प्रथमातिक्रमे कारणाभावाच्च। या तु विद्धाधिका, तस्या अन्यतरस्मिन्नेव दिने दिनद्वयेऽपि वा निशीथस्पर्शास्पर्शसंभवाद्रोहिणीसाहित्येऽपि पक्षत्रयं भवति। अन्यतरस्मिन्नेव दिने निशीथे तत्साहित्यम्, दिनद्वयेऽपि तस्मिंस्तत्साहित्यम्,

दिनद्वयेऽपि तद्विहाय तत्साहित्यमिति। तत्राद्यपक्षे सैव ग्राह्या। तत्र पूर्वदिनगाया ग्राह्यत्वे तावद्वह्निपुराणम्—

"सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि।
भविता साष्टमी पुण्या यावच्चन्द्रादिवाकरौ॥ इति।

"सप्तम्यामर्द्धरात्राधः" इति प्राग्लिखितं विष्णुधर्मोत्तरं च।

उत्तरदिनगायास्तथात्वे—

"मासि भाद्रप्रदेऽष्टम्यां कृष्णपक्षेऽर्धरात्रके।
शशाङ्के वृषराशिस्थे प्रजापत्यर्क्षसंयुते॥
उपोषितोऽर्चयेत्कृष्णं यशोदां देवकीं तथा"।

इति भविष्योत्तरम्।

अत्र स्वरसाच्छुद्धोत्तराप्रतीतिः। अत एव तत्रैव वचनान्तरम्। "अविद्धायां च सर्क्षायां जातो देवकिनन्दनः" इति। अत्र जन्मश्रवणादर्द्धरात्रे ऋक्षसाहित्यं गम्यते। विद्धाविद्धयोर्जन्मश्रवणं च कल्पभेदादविरुद्धम्।

द्वितीयपक्षे तूत्तरैव ग्राह्या।
"वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी।
सऋक्षापि न कर्तव्या सप्तमीसंयुताष्टमी"॥

इति ब्रह्मवैवर्त्तवचनात्।

"प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकम्"
इत्युपक्रमकालमारभ्य तिथेः सत्त्वाच्च।
"यो यस्य विहितः कालः कर्मणस्तदुपक्रमे।
तिथिर्याभिमता सा तु कार्या नोपक्रमोज्झिता"॥

इति बौधायनवचनात्।

अत एव बौधायनेनैवोक्तम् ॥

"उदये तूपवासस्य नक्तस्यास्तमये तिथिः ।
मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः" ॥ इति ॥

तिथेस्त्रिसन्ध्यव्यापित्वाच्च ।

"त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा तिथिः ।
न तत्र युग्मादरणमन्यत्र हरिवासरात्" ॥

इति पराशरवचनात् ।

नक्षत्रस्यास्तमयनिशीथसम्बन्धित्वाच्च ।

"उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः ।
यत्र वा युज्यते राम निशीथे शशिना सह" ॥

इति भविष्यत्पुराणविष्णुधर्मोत्तरवचनात् ।

यत्तु विष्णुधर्मोत्तरे—

"जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते ।
कृत्वोपवासं तिथ्यन्ते तदा कुर्याच्च पारणम्" ॥

इति वचनम् ।

यच्च गरुडपुराणे—

"जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् ।
तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पारणम्" ॥ इति ॥

तदुत्तरदिने "निशीथे रोहिणीयोगाभावे पूर्वदिने च तत्सत्त्वे वर्जनिये" ति वचननिषिद्धसप्तमीविद्धाप्रतिप्रसवार्थं बोध्यम् ।

दिनद्वयेऽप्यर्द्धरात्रं विहाय रोहिणीयोगो यस्तृतीयः पक्षः। सोऽनेकैः प्रकारैर्भवति।

पूर्वेद्युर्निशीथादूर्ध्वं प्रवृत्तयोस्तिथिनक्षत्रयोः परेद्युर्निशीथादर्वागेव समाप्त्या, नक्षत्रस्य पूर्वेद्युर्निशीथादर्वागेव प्रवृत्तस्योत्तरेद्युस्तस्मादर्वाक् समाप्त्या, तिथिमात्रस्य पूर्वेद्युर्निशीथादर्वाक्प्रवृत्तस्योत्तरेद्युस्तस्मादर्वाक्समाप्त्या चेति। सर्वथापि परेद्युरेवोपवासः "वर्जनीया प्रयत्नेने" ति सप्तमीविद्धाया निषेधात्। संकल्पकालमारभ्य तिथिनक्षत्रयोः सत्त्वात्। प्रथमद्वितीयप्रकारयोः परेद्यू रात्रियोगबहुल्याञ्च। "रात्रियुक्तां प्रकुर्वीते" ति वचनात्। यद्यपि द्वितीयप्रकारे नक्षत्रस्य पूर्वेद्युरेव भूयस्त्वम्। तथापि प्रधानभूताया अष्टम्याः परेद्युरेव तत्। नवमीयुताष्टम्यामल्पस्यापि नक्षत्रयोगस्य संपूर्णत्वं च वाचनिकमुक्तं स्कन्दपुराणे—

"सप्तमीसंयुताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम।
प्राजापत्यं द्वितीयेऽह्नि मुहूर्त्तार्द्धं भवेद्यदि॥
तदाष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा"। इति।

तृतीयप्रकारे यद्यप्यष्टमी पूर्वेद्युरर्द्धरात्रव्यापिनी बहुरात्रियोगवती च। नक्षत्रयोगश्च स्वल्पोऽपि सप्तमीयुतायामपि—

"मुहूर्त्तमप्यहोरात्रे यस्मिन्युक्तं हि लभ्यते।
वासरे वा निशायां वा यत्र स्वल्पापि रोहिणी"॥

इत्यादि सामान्यवचनैर्ग्राह्यत्वेनोक्त एव। तथापि सप्तमीविद्धानिषेधप्रतिप्रसवस्य।

"विना ऋक्षं न कर्त्तव्या नवमीसंयुताष्टमी।
कार्या विद्धापि सप्तम्या रोहिणीसंयुताष्टमी"॥

इति स्पष्टं नवमीयुतायाम्। रोहिणीयोगाभावविषयत्वप्रतीतेः।

"रात्रियुक्ता" मित्यस्य च रात्रिव्यापिन्या अर्धरात्रिव्यापिन्याश्च विधेः "दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला" इत्येतत्समभिव्याहारात्सर्वथा नक्षत्रयोगाभावविषयत्वात्सप्तमीविद्धाया बहुभिर्वचनैर्निषेधात्परैव युक्तेति सर्वेषां निबन्धकाराणामभिप्रायः। प्रधानभूताया अष्टम्या अर्धरात्रव्यापिन्याः कर्मकालव्याप्तिशास्त्रादेव सिद्धं यद्ग्राह्यत्वम्। तद्विषयसंकोचार्थमेव हीदं वाक्यं "दिवा वे"त्यादीत्युक्तम्। तेन रोहिणीयोगो मुख्यो निर्णायकः।

तेन क्वचित्संदेहे निशीथे तद्योगः। तेनापि क्वचित्संदेहे सप्तमीविद्धाया निषेधान्नवमीयुक्तायाश्च प्रशंसावचनान्नवमीयोगः। सर्वथाष्टम्या नक्षत्रयोगाभावे तस्या निशोथयोग इति संक्षेपः।

यदा च

"रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी।
अर्द्धरात्रादधश्चोर्ध्वं कलयापि यदा भवेत्॥
जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी"

इति स्कान्दात् "सिंहार्के" इत्दियाप्राग्लिखितवचनाच्चार्द्धरात्रे रोहिणीयोग एवाष्टमी जयन्ती न तु यदा कदाचिद्योगे। तदा तादृश्यां जयन्त्यामेव "जयन्ती शिवरात्रिश्चे" ति "जयन्त्यां पूर्वविद्धाया" मिति च विष्णुधर्मोत्तरगरुड़पुराणवाक्याभ्यां सप्तमीविद्धायाः प्रतिप्रसवो न त्वष्टमीमात्रस्यार्द्धरात्रसत्त्वे तदूर्ध्वं च रोहिणीयोगे।

यदापि—

"श्रावणस्य च मासस्य कृष्णाष्टम्यां नराधिप।
रोहिणी यदि लभ्येत जयन्ती नाम सा तिथिः॥

इत्यादि हेमाद्रिमाधवादिलिखितसनत्कुमारसंहितादिवचनेभ्यो यदा कदाचिद्रोहिणीयुक्तापि जयन्ती। तदापि दिनद्वये परेद्युरेव। वा

जयन्त्यां वाक्यान्तरैर्नवमीविद्धाया विधानात्पूर्वेद्युरेव तादृश्यां सप्तमीविद्धायाः प्रतिप्रसवः। परिशेषात्। उक्तं च तथास्मिन् वचनद्वये माधवेन।

यदापि—

"अभिजिन्नामनक्षत्रं जयन्ती नाम शर्वरी।
मुहूर्त्तो विजयो नाम यत्र जातो जनार्दनः" ॥

इति ब्रह्माण्डपुराणवचनाद्रामावतारादिप्रादुर्भावतिथिष्वपि जयन्तीशब्दप्रयोगदर्शनाच्चात्र प्रकरणेऽष्टमीमात्रं जयन्तीशब्देनोच्यते। तदापि "विना ऋक्ष" मित्येतद्वचनैकवाक्यतया पूर्वक एव विषयोऽस्य सप्तमीविद्धाविधेरिति॥

किञ्चास्मिन्विषये अष्टम्या अल्पत्वेनाग्राह्यत्वाशङ्कानिवृत्त्यर्थं संपूर्णत्वाभिधानपूर्वकग्राह्यत्वमभिधाय प्रतिप्रसवाभावसिद्धः सप्तमीयुतानिषेधोऽनूद्यते पद्मपुराणे—

"पूर्वविद्धाष्टमी या तु उदये नवमीदिने।
मुहूर्त्तमपि संयुक्ता संपूर्णा साष्टमी स्मृता॥
कला काष्ठा मुहूर्त्तापि यदा कृष्णाष्टमी तिथिः।
नवम्यां सैव ग्राह्या स्यात्सप्तमीसंयुता न हि" ॥ इति ॥

संयुक्ता रोहिण्येति शेषः।

किञ्च रोहिणीयोगस्येव नवमीयोगस्यापि फलविशेषहेतुत्वेऽभिहिते तद्वत्या ग्राह्यत्वाभिधानाच्च "कण्ठागतं मधु को नाम नास्वादयती" ति न्यायेन तस्य विशेषस्य निमित्तवशादवश्यकर्त्तव्यायां (१)जातेष्टौ पूतत्वादेरिवावश्यकाम्यत्वात्तदर्थमपि नवमीयुतैव कर्तव्या।

---

(१)—पुत्रे जाते "वैश्वानरं द्वादशकपालं निर्वपेत्" इति विहिता जातेष्टिः पुत्राभ्युदयकामस्य पुत्रोत्पत्तिनिमित्तवती विज्ञेया।

बुधसोमवारयोगेन तु ग्राह्यत्वानाभिधानाद्रोहिणीनवमीयोगेन विषय-विशेषे ग्राह्यत्वेन सिद्धायां फलातिशयमात्रहेतुत्वमात्रं तस्येति विशेषः ।

तथा च स्कन्दपुराणे—

"उदये चाष्टमी किञ्चिन्नवमी सकला यदि ।
भवेत्तु बुधवारेण प्रजापत्यर्क्षसंयुता ॥
अपि वर्षशतेनापि लभ्यते वाथवा न वा । इति ॥
"प्रेतयोनिगताना" मित्यादिप्राग्लिखितं पद्मपुराणं च ॥

एवं च किञ्चिद्रोहिणीयुताया अपि सप्तमीयुताया अर्द्धरात्र-व्यापिन्या यदा त्याज्यत्वम् । तदा किमु वक्तव्यम् । शुद्धायास्तादृश्याः प्राक्साधितं तदिति ।

या तु विद्धाधिका दिनद्वयेऽपि रोहिणीयोगरहिता सा त्रिविधा । अन्यतरस्मिन्नेव दिने निशीथे वर्त्तमाना, दिनद्वयेऽपि तादृशी, दिनद्वयेऽपि तदस्पर्शिनी, चेति । तत्राद्यपक्षे या तादृशी सैव ग्राह्या । "दिवा वा" इत्यादिवाक्यात् । द्वितीयतृतीयपक्षयोस्तूत्तरैव । सप्तमी-युताया निषेधात् । सङ्कल्पादिकर्मकालव्यापित्वादिपूर्वोक्तबहुगुण-लाभाच्च ।

यत्तु—

"अलाभे रोहिणीभस्य कार्याष्टम्यस्तगामिनी ।
तत्रोपवासं कृत्वैव तिथ्यन्ते पारणं भवेत्" ॥

इति गौडधृतं विष्णुरहस्यवचनम् ।

तद्रोहिणीयोगरहिताया अष्टम्याः पूर्वदिन एव निशीथव्या-पिन्याः कदाचिदस्तमयव्याप्तेरपि सम्भवादुपोद्बलकमात्रम् । न तु

निर्णायकम् । "विशेषेणेन्दुसंयुता" मित्यादिवचनविरोधात् । "कृष्णाष्टमी स्कन्दषष्ठी" इत्यादिसामान्यवचनानि तु विशेषवचन-विरोधेऽकिञ्चित्कराण्येव । अविरोधे परमुपोद्बलकानि । एवं सति दिनद्वयेऽप्यस्तमयव्यापिन्यां जन्माष्टम्यां विष्णुरहस्यवचने-नान्यतरनिर्णयासम्भवात् "त्रिसन्ध्यव्यापिनी" त्यादि सामान्यव-चनवशाद्यदुत्तरस्या ग्राह्यत्वमाचार्यचूडामणिनोक्तम् । तदर्द्धरात्रस्य प्रधानकालत्वेन तद्व्यापिन्याश्च ग्राह्यत्वेन सर्वसंमतनानावचनेषूक्तौ सत्यां साहसमात्रम् ।

## अथ पारणाविवेचनम् ।

एवं निर्णीतायां तिथौ भविष्योत्तराद्युक्तप्रकारेण सङ्कल्पपूर्वक-मुपवासं सपरिवारश्रीकृष्णपूजां जातकर्मनालच्छेदादि महोत्सवं पूजापूर्वकं चन्द्रार्घ्यदानं जागरणं च पुराणश्रवणादिना विधाय द्वितीयदिने पारणात्मकं भोजनं कर्तव्यम् । प्राग्लिखितसामान्य-वचनेभ्यः "अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनी" त्यत्रत्यसङ्कल्प-मात्रलिङ्गात्तिथ्यन्तादिकालविशेषविधानाच्च । तच्च पारणं केवला-ष्टम्युपवासे पारणादिने तिथ्यनुवृत्तौ तदन्ते कर्तव्यम् ।

"जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते ।
कृत्वोपवासं तिथ्यन्ते तथा कुर्याच्च पारणम्" ॥

इति विष्णुधर्मवचनात् ।

अत्र जयन्तीशब्दो जन्माष्टमीमात्रवचनः । तिथिमात्रान्ते पारणविधानात् ।

"जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।
पूर्वविद्धैव कर्तव्या तिथिभान्ते च पारणम्" ॥

इति भृगुवचनाच्च ।

अत्र तिथिभयोरितीतरेतरयोगद्वन्द्वमकृत्वैवान्तशब्देन समासस्तिथेर्भस्यान्तो यस्मिन्काले तस्मिन् इति । (१) बृहद्रथन्तरसामेतिवत् ।

---

(१) बृहद्रथन्तरसामवर्णनं जैमिनीयन्यायमालायां माधवेन विहितम् ।

"अतिदेश्यं विनिश्चेतुं कवतीषु रथन्तरम् ।
गायतीत्यृग् गानयुक्ता शब्दार्थौ गानमेव वा ॥
इति चिन्ता गानयुक्ता त्वभि त्वेत्यृक् प्रसिद्धितः ।
लाघवादतिदेशस्य योग्यत्वाच्चान्तिमो भवेत् ॥

इदमाम्नायते—"कवतीषु रथन्तरं गायति" इति । "कया नश्चित्र आभुवत्"—इत्याद्यास्तिस्र ऋचः कवत्यः । तासु वामदेव्यं सामाध्ययनतः प्राप्तम् । तद्बाधितुं रथन्तरं साम तास्वतिदिश्यते । तत्र—अतिदेश्यस्वरूपं निश्चेतुं रथन्तरशब्दस्यार्थश्चिन्त्यते । गानविशेषयुक्ता "अभित्वा शूर नोनुमः" इतीयमृक् "रथन्तरम्" इत्युच्यते । कुतः—अध्येतृप्रसिद्धितः । "रथन्तरं गीयताम्" इति केनचिदुक्ता अध्येतारः स्वरस्तोभविशेषयुक्तां "अभि त्वा" इत्यृचं पठन्ति, न तु स्वरस्तोभमात्रम् । तस्मात्—गानविशिष्टाया ऋचो रथन्तरशब्दार्थत्वम् । इति प्राप्ते ब्रूमः—स्वरादिविशेषानुपूर्वीमात्रस्वरूपमृगक्षरव्यतिरिक्तं यद्गानम्, तदेव रथन्तरशब्दस्यार्थः । कुतः—लाघवात् । किं च—कवतीष्वृक्षु गानमतिदेष्टुं योग्यम् । न त्वृचस्तद्योगतास्ति । "कया नः" "अभि त्वा" इत्यनयोर्ऋचोर्युगपदाराधेयभावेन पठितुमशक्यत्वात् । तस्मात्—गानविशेष एव रथन्तरादिशब्दार्थः" ।
( ७ अध्या० २ पा० )

पुनरपि तत्रैव तेन नवमाध्यायस्य द्वितीयपादे प्रथमाधिकरणस्य प्रथमवर्णके सामशब्दस्य गानमात्रवाचित्वं स्मारितम् । यथा—

"सामोक्तिर्बृहदाद्युक्ती गीतायामृचि केवले ।
गाने वा, गान एवेति स्मार्यते सप्तमोदितम् ॥

सामान्यवाची सामशब्दः, विशेषवाचिनो बृहद्रथन्तरादिशब्दाश्च गानमात्रे वर्त्तन्ते । न तु गानविशिष्टायामृचि, इत्ययं निर्णयः सप्तमस्य द्वितीयपादे सिद्धः । सोऽत्र वक्ष्यमाणविचारोपयोगितया स्मार्यते" । इति ॥

[ अत्र सायणसामवेदभूमिकापि द्रष्टव्या ( पृष्ठे ६—१० ) । इयं च १६२५ वि० संवत्सरे सत्यव्रतसामश्रमिणा प्रकाशिता ]

पूर्वं तिथिनक्षत्रयोः पृथङ्निर्देशात्। केवलरोहिणीव्रतस्यापि च गौड़निबन्धेषु दृष्टत्वात्। तेन केवलतिथिव्रते तिथ्यन्ते नक्षत्रव्रते नक्षत्रान्तर इति द्रष्टव्यम्। रोहिणीयुक्ताष्टम्युपवासे तु पारणादिने उभयानुवृत्तावुभयान्ते तत्कर्तव्यम्।

"कार्या विद्धा तु सप्तम्या रोहिणीसहिताष्टमी।
तत्रोपवासं कुर्यात्तु तिथिभान्ते च पारणम्"॥

इति पद्मपुराणात्।

"अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं क्वचित्।
हन्यात्पुरा कृतं कर्म उपवासार्जितं फलम्॥
तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम्।
तस्मात्प्रयत्नतः कुर्यात्तिथिभान्ते च पारणम्"॥

इति ब्रह्मवैवर्त्तवचनाच्च।

इदं चोभयान्ते पारणं यदि सार्धयामोपरितनैकयामात्मकमहानिशातोऽर्वागुभयान्तप्रतीक्षया भोजनकालो लभ्यते तदा।

"न रात्रौ पारणं कुर्याद्दृते वै रोहिणीव्रतात्।
तत्र निश्यपि तत्कुर्याद्वर्जयित्वा महानिशाम्"॥

इति गौडनिबन्धोदाहृतवचनात्। रोहिणीव्रतं तद्युक्ताष्टमीव्रतमेव। "यो ह्युभयो" रिति न्यायात्।

"सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते।
अन्यथा पुण्यहानिः स्याद्दृते धारणपारणम्"॥

इति ब्रह्मवैवर्त्ते।

"अन्यतिथ्यागमो रात्रौ तामसस्तैजसो दिवा।
तामसे पारणं कुर्वंस्तामसीं गतिमश्नुते" ॥

इति च गरुडपुराणे यो रात्रिपारणनिषेधः। स जयन्तीव्रतव्यतिरिक्तविषय इत्यर्थः। यदा तु तादृशे काले उभयान्तो न लभ्यते किन्त्वेकतरान्त एव। तदा तत्रापि पारणं कर्तव्यम्।

जयन्तीं प्रक्रम्य वह्निपुराणे—

"भान्ते कुर्यात्तिथेर्वापि शस्तं भारत पारणम्" इति।

"रोहिणीसंयुता चेयं विद्वद्भिः समुपोषिता।
वियोगे पारणं चक्रुर्मुनयो ब्रह्मवादिनः ॥
सांयोगिके व्रते प्राप्ते यद्येकोऽपि वियुज्यते।
तत्रैव पारणं कुर्यादिति वेदविदो विदुः" ॥

इति वचनात्।

"तिथिनक्षत्रसंयोगे उपवासो यदा भवेत्।
पारणं तु न कर्त्तव्यं यावन्नैकस्य संक्षयः" ॥

इति नारदीयवचनाच्च।

"सांयोगिके" इति वचनमेतदग्रे कचित्। यदा तु महानिशाऽव्यवहितपूर्वक्षण एव महानिशायां वा एकतरस्याप्यन्तः, तदा महानिशायामपि पारणं कुर्यात्।

"तिथ्यृक्षयोर्यदा छेदो नक्षत्रान्तमथापि वा।
अर्द्धरात्रेऽपि वा कुर्यात्पारणं त्वपरेऽहनि" ॥

इति हेमाद्रिधृतवचनात्। अर्द्धरात्रे महानिशायाम्।

तत्रैव भोजननिषेधात्प्रतिप्रसवस्योचितत्वात्। अत एव चन्द्रोपरागेऽप्युक्तं "मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशेति"।

नक्षत्रान्तग्रहणं च तिथ्यन्तस्याप्युपलक्षणम् । प्राधान्यात्तिथिग्रहणौचित्येऽपि यन्नक्षत्रग्रहणं तत्—

"या: काश्चित्तिथय: प्रोक्ता: पुण्या नक्षत्रयोगत: ॥
ऋक्षान्ते पारणं कुर्याद्विना श्रवणरोहिणीम्" ॥

इति वचनाज्जयन्तीव्रते नक्षत्रान्तो नापेक्षितस्तिथिमात्रान्तेऽपि मुख्यतयैव पारणं कर्तव्यमिति भ्रमो भवेत्तन्निवृत्त्यर्थम् । इदं तु वचनं जयन्तीव्रतेऽपि । नक्षत्रान्तप्रतीक्षाया बहुभिर्वचनैरुक्तत्वात् । अन्यत्र सांयोगिके व्रते "सांयोगिके" इत्यादि सामान्यवचनादेकतरान्तोऽपि मुख्य: काल इति नक्षत्रमात्रान्ते पारणं कर्तव्यम् । श्रवणद्वादशीजन्माष्टमीव्रतयोस्तूभयान्त एव मुख्य: काल इति नक्षत्रमात्रान्ते पारणं कर्त्तव्यमित्यत्रोभयान्तस्य मुख्यपक्षत्वद्योतनार्थत्वेन व्याख्येयम् ।

तेनान्यत्र "तिथिनक्षत्रव्रतेष्वन्यतरान्तोऽपि मुख्य: काल:"। अत्र तूभयान्त एव स: । अन्यतरान्तस्तु गौण: । "तिथिनक्षत्रनियमे" इति सामान्यवचनेन तु बृहद्रथन्तरसामेतिवद्द्वन्द्वपूर्वक उत्तरपदसमासो न भवत्येव । "पञ्चगवधनो" (१) "वाक्त्वचप्रिय" इत्यादिवत्तल्लिङ्गाभावात् । कृतेऽपि चाद्वन्द्वे तदर्थोऽविवक्षित एवोद्देश्यविशेषणत्वा" दित्युक्तम् ।

गौडनिबन्धेषु तु "तिथ्यृक्षयो" रिति वचनं "अर्धरात्रे तत: कुर्यात्पारणं त्वपरेऽहनि' इति पठित्वा यद्यर्धरात्रे उभयोरन्यतरस्य वान्तस्ततोऽपरेऽहनि दिवस एव पारणं कुर्यान्न तु कस्याप्यन्त: प्रतीक्षणीय इति "वर्जयित्वा महानिशा" मित्येतद्विरोधेनैव व्याख्यातम् ।

शक्यं तु हेमाद्र्युदाहृतपादेऽपि तदविरोधेन व्याख्यातुं व्रतान्तरनिषिद्धरात्रिपारणप्रतिप्रसवार्थत्वेन । अत्रार्द्धरात्रेऽपि

---

(१)—अत्र "द्वन्द्वाच्चुदषहान्तात्समाहारे" (५ । ४ । १०६) इत्यनेन टच्प्रत्यय: ।

पारणं कमुतुचितम्। किमु ततः पूर्वरात्राविति। अपि शब्दश्रवणात्स्वार्थतात्पर्यत्यागेनान्यार्थतात्पर्यावगमात्। "आततायिनमायान्तमपि वेदान्तपारगं रणे" इत्यादिवत्।

तेन महानिशातः पूर्वमन्यतरान्तप्रतीक्षयापि भोजनकालालाभे सामान्यरूपस्यापि रात्रिपारणनिषेधस्यातिक्रमे कारणाभावात् "तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पारण" मिति वचनाच्च जागरान्ते दिवैव पारणं कर्त्तव्यम्। महानिशातः पूर्वं मुख्यगौणान्यतरकाललाभे तु दाक्षिणात्यनिबन्धेष्वलिखनात् "न रात्राविति वचनेनाश्वासेऽपि रोहिणीव्रतशब्देन वा नक्षत्रमात्रव्रतग्रहणेऽपि "तिथ्यृक्षयो" रित्यादि वचनादेव कैमुतिकन्यायव्याख्यातान्महानिशातः पूर्वं रात्रावप्यत्र पारणं सिध्यत्येव मुख्यगौणपक्षाश्रयणेन। न तु व्रतान्तरवद्दिवैव पारणमिति नियमः।

मदनरत्ने तु रात्रिपारणनिषेधवचनानामत्रापि प्रवृत्तिमङ्गीकृत्य दिवान्यतरान्तलाभे दिवैव, नतूभयान्तप्रतीक्षया रात्रौ। दिवान्यतरान्तस्याप्यलाभे तु महानिशातः पूर्वम्। तल्लाभे तत्रैव। महानिशायामेव तल्लाभे तत्रापि। "अर्द्धरात्रेऽपि वा" इति वचनात्। "उत्सवान्ते वा" इति त्वशक्तविषयमेवेत्युक्तम्। अशक्तस्य तु शेषिविरोधप्रसङ्गात् "उत्सवान्ते" इति वचनाच्चैकतराविगमेऽपि पारणं भवत्येवेति।

## अथ नित्यत्वकाम्यत्वविवेचनम्।

इदं च जन्माष्टमीव्रतं नित्यं तावद्भवत्येव।

"प्राजापत्यर्क्षसंयुक्ता श्रावणस्यासिताष्टमी।
वर्षे वर्षे तु कर्त्तव्या तुष्ट्यर्थं चक्रपाणिनः"॥

इति वीप्साश्रवणात्।

न च वीप्सायुक्तो वसन्तो हि निमित्तत्वेन गम्यत इति न्यायेनाष्टमीविशेषावच्छिन्नस्य जीवनस्य निमित्तत्वे तस्य तुष्ट्यर्थमिति

फलस्य चोद्देश्यद्वयस्य कथमेकस्मिन्वाक्ये समावेश इति वाच्यम् । भिन्नरूपत्वात् । एकरूपं ह्युद्देश्यद्वयं निमित्तरूपं फलरूपं वा एकेन विधिना नान्वेति । एकेनैव नैराकाङ्क्ष्यात् । यस्य पिता पितामह इतिवत् । भिन्नरूपं त्वन्वेत्येव । यथा जातेष्टिविधौ जननं निमित्तं पूतत्वादि च फलम् । नहि निमित्तेन फलस्यकाङ्क्षा निवर्त्यते फलेन वा निमित्तस्य । संभवति ह्यस्मिन्निमित्ते अनेनेदं फलं भावयेदित्येकरूपा वचनव्यक्तिः । तेन यदुद्देश्यद्वयान्वयनिमित्तवाक्यभेदपरिहार्थं यच्चकृपाणितुष्ट्यर्थं व्रतं वाक्यान्तरेण विहितं तद् "वर्षे वर्षे कर्तव्य" मिति वचनव्यक्त्यभिधानं हेमाद्रेस्तदयुक्तमेव । निमित्तस्याविधेयत्वाच्च । पूतत्वादीनां त्वर्थवादकल्प्यानां सापेक्षाणामेव फलतेति न फलानेकत्वम् । अकरणे प्रत्यवायश्रवणाच्च नित्यम् ।

तथा हि भविष्योत्तरे—

"श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
न करोति नरो यस्तु भवति क्रूरराक्षसः" ॥ इति ॥

तत्रैव जन्माष्टमीं प्रकृत्य—

"अकुर्वन्नरकं याति यावदिन्द्राश्चतुर्दश:" ॥ इति ॥

स्कन्दपुराणेऽपि—

"शूद्रान्नेन तु यत्पापं शवहस्तस्थभोजने ।
तत्पापं लभ्यते पुंभिर्जयन्त्यां भोजने कृते" ॥ इति ॥

तथा—

"गृध्रमांसं खरं काकं श्येनं वा मुनिसत्तम ।
मांसं वा द्विपदां भुक्तं कृष्णजन्माष्टमीदिने ॥
कृष्णाष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम ।
त्रैलोक्यसंभवं पापं तेन भुक्तं द्विजोत्तम ॥

ब्रह्मघ्नस्य सुरापस्य गोवधे स्त्रीवधेऽपि वा ।
न लोको मुनिशार्दूल जयन्तीविमुखस्य च ॥
जयन्तीवासरे प्राप्ते करोत्युदरपूरणम् ।
पाट्यते तिलमात्रं तु यमदूतैः कलेवरम्" ॥ इत्यादि ।

काम्यं चेदम् । फलस्यापि श्रवणात् ।

तथा हि स्कान्दे—

"जन्माष्टमीव्रतं ये वै प्रकुर्वन्ति नरोत्तमाः ।
कारयन्त्यथ वा लोकांल्लक्ष्मीस्तेषां सदा स्थिरा ॥
स्मरणं वासुदेवस्य मृत्युकाले भवेन्मुने ।
सिद्ध्यन्ति सर्वकार्याणि कृते जन्माष्टमीव्रते" ॥ इति ।

विष्णुरहस्येऽपि—

"प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।
मुहूर्त्तमपि लभ्येत सोपोष्या सा महाफला" ॥ इत्यादि ।

न च कादाचित्कत्वाकादाचित्कत्वयोर्विरोधात्कथमेकस्य नित्यकाम्यतेति वाच्यम् । न हि कामसंयोगस्य कादाचित्कत्वसिद्धिः फलम् । किं तु कामनाप्रयुक्तमप्यनुष्ठानम् । तस्मिन्कृते फललाभसिद्धिश्च । तेनाग्निहोत्रदर्शपूर्णमासादिवन्न कोऽपि विरोधः ।

ननु यदीदं जन्माष्टमीव्रतं नित्यम् । तर्हि तदकरणे प्रायश्चित्तश्रवणेन भाव्यम् । यथा नित्यैकादशीव्रताकरणे—

"अष्टम्यां च चतुर्दश्यां दिवा भुक्त्वैन्दवं चरेत् ।
एकादश्यां दिवा रात्रौ नक्तं चैव तु पर्वणि" ॥ इति ।

यद्यप्यष्टमीचतुर्दशीपर्वसमभिव्याहाराद्व्रताद्भिन्नो यो भोजननिषेध एकादश्यां वक्ष्यते, तदतिक्रम इदं प्रायश्चित्तम् । तथापि व्रतस्याप्यभोजनसंकल्परूपस्य फलतोऽभोजनरूपत्वात्तदतिक्रमेऽपीदमेव

युक्तम् । अष्टम्यादौ तु नित्यव्रताभावान्निषेधातिक्रम एव तत् । न हि व्रतकाण्डेऽष्टमीचतुर्दश्योर्नक्तभोजनं पर्वणि च दिवाभोजनं नित्यव्रतत्वेन क्वापि श्रूयते । तथा नित्यत्वे कदाचित्तदशक्तौ प्रतिनिधि-नियमेनापि भाव्यम् । यथैकादशीव्रत एव "एकभक्तेन नक्तेन क्षीण-वृद्धातुरः क्षिपे" दिति ।

अत्रोच्यते । प्रायश्चित्तं तावत्—

"प्राणायामशतं कार्यं सर्वपापापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि" ॥

इत्यादि भविष्यति ।

न हि सर्वस्य विधेर्निषेधस्य वाऽकरणे प्रायश्चित्तं विशेषत उपदिष्टमेव भवति । तथा सत्येतद्वाक्यानर्थक्यापत्तेः । प्रतिनिधिस्तु सामान्यत उक्त एव ब्रह्मवैवर्त्ते—

"उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत् ।
तावद्धनादि वा दद्याद्यद्भुक्ताद् द्विगुणं भवेत् ॥
सहस्रसंमितां देवीं जपेद्वा प्राणसंमात् ।
कुर्याद्वा दशसंख्याकान्यथाशक्ति व्रते नरः" ॥ इति ।

देवीं गायत्रीम् ।

तस्मान्न कोऽपि दोष इति संयोगपृथक्त्वादुभयरूपत्वं जन्माष्टमी-व्रतस्य । यत्तु "जन्माष्टमीजयन्तीव्रतयोर्भेदसिद्ध्यर्थं जयन्तीव्रतमेवो-भयरूपम् । जन्माष्टमीव्रतं तु केवलनित्य" मित्युक्तं माधवाचार्येण ।

तत् "जन्माष्टमीव्रतं ये वा" इति स्कन्दपुराणे जन्माष्टमीव्रत एव फलश्रवणादयुक्तम् ।

तथा—

"केवलेनोपवासेन तस्मिञ्जन्मदिने मम ।
शतजन्मकृतात्पापान्मुच्यते नात्र संशयः" ॥

इति माधवोदाहृतेऽपि वाक्ये पापक्षयरूपं फलं श्रूयत एव । न हि पापक्षयरूपफलश्रवणमात्रेण नित्यत्वम् । (१) विघनादियागानामपि तदापत्तेः । किन्तु निमित्तोपाधौ विधानात् । तदावेदकं च वीप्सादि ।

---

(१)—विघनसंज्ञकौ द्वावग्निष्टोमसंस्थौ यागौ "विघनौ पशुकामस्य" इत्यनेन कात्यायनश्रौतसूत्रे ( २२ । ११ । १६ ) प्रतिपादितौ । तत्रैको विघनाख्यो यागस्तैत्तिरीयब्राह्मणे निरूपितः—

"इन्द्रं वै स्वाविशो मरुता नापाचयन् । सोऽनपचय्यमान एतं विघनमपश्यत् । तमाहरत् । तेनायजत । तेनैवासां तं संस्तम्भं व्यहन् । यद् व्यहन् । तद्विघनस्य विघनत्वम् । विपाप्मानं भ्रातृव्यं हते । य एतेन यजते । य उ चैनमेवं वेद" । ( २ । ७ । १८ । १ )

"पुरा कदाचिद्राज्यं कुर्वन्तमिन्द्रं मरुत्संज्ञकाः प्रजाः करप्रदानेन पूजां नाकुर्वन् । सोऽयमपूज्यमान इन्द्रस्तत्परिहारायैतं विघनाख्यं क्रतुविशेषमेकाहं निश्चित्य, तदनुष्ठानेनासां प्रजानां तं संस्तम्भं स्तम्भनरूपं प्रातिकूल्याचरणं व्यहन् विहतं कृतवान् । यत् यस्मात् कारणात्, अनेन कर्मणा विहतवान् । तस्माद्विहन्त्यनेनेति व्युत्पत्त्या कर्मणो विघननाम सम्पन्न" मिति सायणभाष्यम् ।

तदसमभिव्याहृते तु पापक्षयफलश्रवणेऽपि काम्यत्वमेव त्रिघनादिवत्।

---

द्वितीयो त्रिघनश्च ताण्ड्यमहाब्राह्मणे प्रतिपादितः—

"इन्द्रमदेव्यो माया असचन्त। स प्रजापतिमुपाधावत्तस्मा एतं त्रिघनं प्रायच्छत्। तेन सर्वामृधो व्यहत। यद् व्यहत तद्त्रिघनस्य त्रिघनत्वम्"। ( १६। १६। १ )

"अदेवा असुरास्तेषां सम्बन्धिन्यो यास्ता अदेवत्यो माया वञ्चना असुरैः प्रयुक्ता इन्द्रमसचन्त, इन्द्रेण संयुक्ता अभवन्। स चेन्द्रो मायापरिहारोपायार्थं प्रजापतिं सेवित्वा त्रिघनाख्यं क्रतुं लब्ध्वा तेन क्रतुना सर्वामृधः सर्वाञ्छत्रून् व्यहत विशेषेण हतवान्। यस्मात् व्यहत। अनेन व्युत्पत्त्या क्रतोर्त्रिघननामकत्वं सम्पन्नम्" इति सायणाचार्यः।

एतौ त्रिघनसंज्ञकौ यागौ फलश्रुतिमात्रेण न नित्यौ, किं तु काम्याविति ग्रन्थकृदाशयः। तथा हि—यागेषु कचित्पापक्षयरूपं फलं श्रुतम्। तत्र नित्यनैमित्तिककर्मणां पापक्षयफलकत्वस्य बोधनात् यत्र यत्र पापक्षयः फलं श्रूयते तत्र तत्र सर्वस्यापि नित्यत्वं नैमितिकत्वं वा भवितुमर्हतीति चेन्न समीचीनम्। कुत इति चेत् त्रिघनादियागेषु व्यभिचरितत्वात्। त्रिघनो नाम यागः पापक्षयार्थं विहितोऽपि काम्यक्रतुकाण्डपाठात् काम्य एव। न तु नित्यो नैमित्तिको वा। यदि पापक्षयफलकत्वमेव नित्यताप्रयोजकं स्यात्। तर्हि तस्यापि ( त्रिघनसंज्ञकक्रतोरपि ) नित्यत्वापत्तिः। तत्तु नेष्टं कस्यापि। अतो यत्र वीप्सादि ( अहरहः सन्ध्यामुपासीतेत्यादि ) श्रवणं तस्यैव नित्यत्वं स्वीकर्तुं शक्यते। त्रिघने तु वीप्साद्यभावान्न नित्यत्वापत्तिरिति सर्वमवदातम्।

न च "अमृतत्वं च गच्छती" त्यवश्यापेक्षितामृतत्वप्राप्तिलक्षणफलश्रवणाद्यथा पुत्रोत्पादनस्य नित्यत्वमुक्तं (१) सोमविद्याप्रजनये, तथा पापक्षयस्यापि सर्वदा सर्वेषामपेक्षितत्वात्तत्फलत्वेन नित्यत्वं स्यादेव, अवश्यापेक्षितफलसाधनत्वमेव ह्यावश्यकत्वापरपर्यायं नित्यत्वमिति वाच्यम्।

---

(१)—सोमविद्याप्रजनयो मीमांसायां विवृतः। यथा जैमिनीयन्यायमालायाम्—

"सोमाधीतिप्रजं काम्यं नित्यं वा कमतोऽग्रिमः।
वीप्सानुष्ठेयविज्ञानलोकैस्तन्नित्यतेष्यते॥

इदमाम्नायते—"सोमेन यजेत" "स्वाध्यायमधीयीत" "प्रजामुत्पादयेत्" इति।

तत्र सोमः काम्यः, "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति कामसंयोगेनाम्नातत्वात्। अध्ययनप्रजोत्पादनयोरपि विश्वजिन्न्यायेन स्वर्गे फलत्वेन कल्पिते कामियोगोऽपि कल्प्यते। तस्मादिदं त्रयं काम्यम्।

मैवम्। वीप्सादिना नित्यत्वसिद्धेः। "वसन्ते वसन्ते ज्योतिषा यजेत" इति वीप्सा प्रतिवसन्तं निमित्तीकृत्य सोमयागं विधत्ते। अध्ययनस्य तु न स्वर्गः फलम्, दृष्टप्रयोजनस्यानुष्ठेयविज्ञानस्य संभवात्। तत्र क्रत्वनुष्ठानस्य नित्यत्वात्तद्धेतोरध्ययनस्यापि नित्यत्वमनिवार्यम्। "अनुत्पाद्य सुतान्न लोकं गच्छति" इति स्मृतेर्लोकसिद्ध्यर्थमुत्पादनस्यापि नित्यत्वम्। अनेनैवाभिप्रायेणेदमाम्नातम्—'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते। ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः। एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी" इति। अत्र ब्राह्मणग्रहणमितरयोरप्युलक्षणार्थम्। सोमादिविधिषु विशेषस्याश्रवणात्। तस्मात्—सोमादिकं नित्यम्"। (६ अ० २ पा० ११ अधि०)

यतस्तत्राप्यकरणप्रत्यवायश्रवणादेव नित्यत्वम् । अमृतत्व-प्राप्तिफलश्रवणोपन्यासस्तु फलश्रवणमपि तदविरोधीत्येवमर्थः । न तु नित्यत्वसाधकत्वेन । अत एव हेत्वन्तरेण नित्यत्वे सिद्धे पापक्षय-रूपफलकल्पनं तदविघातायोक्तं सर्वशक्तिनये नित्यकर्मणाम् । स्वर्गकल्पने तद्विघातप्रसङ्गादिति ।

तदयं संग्रहः ।

शुद्धा च सप्तमीविद्धेत्येवं जन्माष्टमी द्विधा ।
रात्रिमात्रेऽपि सत्याश्च वेधोऽष्टम्या भवेदिह ॥
प्रत्येकं सा पुनर्द्वेधा परेऽहनि सती न वा ।
तादृश्यपि तथा द्वेधा रोहिणीसहिता न वा ॥
तत्र शुद्धाथवा विद्धा परेऽहन्यसती युता ।
रोहिण्या रहिता वापि विमतिस्तत्र नास्ति हि ॥
या तु शुद्धाथवा विद्धा परेऽहनि सती युता ।
रोहिण्या सा द्विधैकस्मिंस्तादृश्यथ दिनद्वये ॥
आद्ये पक्षे यैव युक्ता रोहिण्या सैव संमता ।
या तु शुद्धाधिका ऋक्षयुता तद्वियुतापि वा ॥
दिनद्वयेऽप्यसौ पूर्वा विद्धा सत्यधिका त्रिधा ।
एकस्मिन्नह्नि रोहिण्या निशीथे संयुताथवा ॥
दिनद्वयेऽपि तस्मिन्वा तद्विहायाथ तादृशी ।
सैव ग्राह्याद्यपक्षे स्यात्पक्षयोरन्योः परा ॥
विद्धाधिकाहर्द्वयेऽपि रोहिण्या रहिता त्रिधा ।
एकस्मिन्नह्नि वर्त्तेत निशीथेऽहर्द्वयेऽपि वा ॥
तत्र सत्यसती वापि प्रथमे सैव संमता ।
द्वितीये च तृतीये च पक्षे ग्राह्या परैव सा ॥
तिथ्यन्ते पारणं कुर्यादृक्षशून्यतिथिव्रते ।
तिथिनक्षत्रसाध्ये तूभयान्तेऽर्वाङ्महानिशः ॥

भुक्तिश्चेत्स भवेद्वृक्ष तिथ्यन्ते पारणं भवेत् ।
उभयान्तो न लभ्यश्चेत्तस्मिन्नेकान्ययेऽपि तत् ॥
महानिश्येव सोऽपि स्याद्यदि तत्रापि पारणा ।
दिवैव वोत्सवान्ते स्यात्तादृशे विषये भुजिः ॥
मुख्यः कालो द्वयान्तोऽन्यतरान्तो गौण एतयोः ।
दिवान्यतरसंप्राप्तौ तत्रैव भुजिरिष्यते ॥
दिवैकोऽपि न लभ्येत लभ्येतार्वाङ्महानिशः ।
तत्राप्यन्यतरत्र स्यान्महानिश्येव चेद्भवेत् ॥
मुख्यो गौणोऽथ तत्रापि पारयेदिति केचन ।
अशक्तस्तु दिवैवैकाविगमेऽपि च पारयेत् ॥
जन्माष्टमीव्रतं चैतन्नित्यं काम्यं च सम्मतम् ।
अतोऽशक्तः प्रतिनिधिमेकब्राह्मणभोजनम् ॥
द्विगुणामादिदानं वा सावित्रीजपमेव वा ।
सहस्रकृत्वः प्राणस्य संयमान्द्वादशाथवा ॥
अथ नक्तैकभक्तादीन्वक्ष्यमाणान्हरेर्दिने ।
कर्तृप्रतिनिधिं वापि कुर्यादित्येष निश्चयः ॥
व्रतस्य सर्वथा लोपेऽनादिष्टव्रतमिष्यते ॥

## अथ श्रीकृष्णजन्माष्टमीव्रतपद्धतिः ।

इयमत्र संक्षेपतो भविष्योत्तरगरुडपुराणाद्युक्तप्रकारेण श्रीकृष्णजन्माष्टमीव्रतानुष्ठानपद्धतिः ॥

उपवासपूर्वदिने कृतदन्तधावनो लघुभुग्रात्रौ जितेन्द्रियः सुप्त्वोपवासदिने प्रातः स्नानादिनित्यकृत्यं विधाय—

"सूर्यः सोमो यमः कालः सन्ध्ये भूतान्यहः क्षपा ।
पवनो दिक्पतिर्भूमिराकाशं खचरा नराः ।
ब्राह्मं शासनमास्थाय कल्पध्वमिह संनिधिम्" ॥

इत्युक्त्वा प्राङ्मुखो दर्भहस्तः फलपुष्पाक्षतयुतजलपूर्णमौदुम्बरादिपात्रं दक्षिणहस्तेनादाय मासपक्षवारनक्षत्रयुतां प्रातर्वर्त्तमानामष्टमीं सप्तमीं वा तिथिमधिकरणत्वेनोलिख्यामुकफलकामः पापक्षयकामो वा श्रीकृष्णप्रीतये जन्माष्टमीव्रतमहं करिष्ये ।

तथा—

"वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये ।
उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ॥
अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रसरोहिणीम् ।
अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ॥
एनसो मोक्षकामोऽस्मि यद्गोविन्द त्रियोनिजम् ।
तन्मे मुञ्चतु मां त्राहि पतितं शोकसागरे ॥
आजन्ममरणं यावद्यन्मया दुष्कृतं कृतम् ।
तत्प्रणाशय गोविन्द प्रसीद पुरुषोत्तम" ॥

इति श्लोकचतुष्टयमुच्चार्य पात्रस्थं जलं क्षिपेत् ।

ततः सूपलिप्ते शोभने विशालप्रदेशे कदलीस्तम्भनानावर्णवासःशोभितं समन्तात्स्थापितैराम्रपल्लवादियुतैर्जलपूर्णनवकलशैर्दीपावलिभिः पुष्पमालाभिर्युतं चन्दनागुरुधूपितमग्निखड्गकृष्णछागरक्षामणिद्वारन्यस्तमुसलायुदितं गीतवादित्रनृत्यादिमङ्गल्योपेतं षष्ठ्या देव्याधिष्ठितं देवक्याः सूतिकागृहं विधाय तस्य समन्ताद्भित्तिषु सकुसुमाञ्जलीन्देवगन्धर्वादीन् खड्गचर्मधरवसुदेवदेवकीनन्दयशोदागर्गगोपीगोपान् कंसनियुक्तान्गोधेनुकुञ्जरान् यमुनां तद्ध्रदस्थं कालियमन्यच्च सकलं तत्कालीनं गोकुलचरितं यथासंभवं लिखित्वा सूतिकागृहमध्ये मञ्चकं स्थापयित्वा मध्याह्ने नद्यादिजले तिलैः स्नात्वार्द्धरात्रे पूर्ववदद्य सपरिवारश्रीकृष्णपूजां करिष्य इति सङ्कल्प्योत्तमप्रच्छदपटावृतमञ्चकोपरिसमीपप्रसुप्तस्तनपायिश्रीकृष्णप्रतिमोपेतां पङ्कजासनया

देवक्याश्चरणौ संवाहयन्त्या श्रीप्रतिमया चोपेतां यथाविभवं काञ्च-नादिनिर्मितां प्रसुतां देवकीप्रतिमां स्थापयेत् ।

प्रतिमा चाष्टविधा भवति—

"काञ्चनी राजती ताम्री पैत्तली मृन्मयी तथा ।
वार्क्षी मणिमयी चैव वर्णकैर्लिखिता तथा" ॥ इति ॥

एवं वक्ष्यमाणा अपि प्रतिमाः । तथा तत्रैव सूतिकागृहे एकदेशे मञ्चकान्तरोपरि प्रसूतवरकन्यकयशोदाप्रतिमां च स्थापयेत् ।

प्रतिमापूजनं च सर्वत्र प्राणप्रतिष्ठापुरःसरं कर्त्तव्यम् ।

"प्रतिमायाः कपोलौ द्वौ स्पृष्ट्वा दक्षिणपाणिना ।
प्राणप्रतिष्ठां कुर्वीत तस्यां देवस्य वा हरेः ॥
अकृतायां प्रतिष्ठायां प्राणानां प्रतिमासु च ।
यथा पूर्वं तथा भावः स्वर्णादीनां न देवता ॥
अन्येषामपि देवानां प्रतिमास्वपि पार्थिव ।
प्राणप्रतिष्ठा कर्तव्या तस्यां देवत्वसिद्धये ॥
वासुदेवस्य बीजेन 'तद्विष्णो' रित्यनेन च ।
तथैव हृदयेऽङ्गुष्ठं दत्त्वा शश्वच्च मन्त्रवित् ॥
एभिर्मन्त्रैः प्रतिष्ठां तु हृदयेऽपि समाचरेत् ।
'अस्मै प्राणाः प्रतिष्ठन्तु अस्मै प्राणाः क्षरन्तु च ॥
अस्मै देवत्वसंख्यायै स्वाहे' ति यजुरीरयन् ।
अङ्गमन्त्रैरङ्गिमन्त्रैर्वैदिकैरित्यनेन च ।
प्राणप्रतिष्ठां सर्वत्र प्रतिमासु समाचरेत्" ॥

इति कालिकापुराणात् ।

बीजेन मूलमन्त्रेण। इदं च प्रकृतविषयएवभिप्रायेण। तेनान्येषामपि स स मूलमन्त्रो वैदिकमन्त्रश्च द्रष्टव्यः। बहुवचनाच्च तदुभयान्ते "अस्मै" इत्यपि मन्त्रः। स्वहृदयेऽङ्गुष्ठं दत्त्वा मन्त्राः पठनीयाः। प्रतिमायान्तु कपोलौ स्पृष्ट्वेति विशेषः। "अग्रेऽप्युक्तम्"इत्यनेन चेति। शश्वत् यावत्सकलमन्त्रसमाप्तिः। हृदयेऽपि। यदा "अप्स्वग्नौ हृदये सूर्ये" इति वचनाद्धृदये देवपूजा क्रियते तदा 'अङ्गमन्त्रै' रित्यङ्गदेवताप्रतिमासद्भावे तासु तत्पाठः। तदभावे प्रधानप्रतिमायामेव। तत्संनिध्यर्थं प्रधानदेवतास्थापनानन्तरम्। तेनात्रापि "प्रतिमं दक्षिणहस्तेन" प्रतिमाकपोलौ स्पृष्ट्वा तत्तद्देवतानां मूलमन्त्रान् वैदिकमन्त्रांस्तदभावे प्रणवादिचतुर्थ्यन्तनमोऽन्तनामानि "अस्मै" इत्यस्य स्थाने तत्तद्देवतानामयुक्तं "अस्मै" इत्यादिस्वाहान्तं च मन्त्रं पठन् प्राणप्रतिष्ठां कुर्यात्। तथा तत्रैव पीठाद्युपरि देवकीसहितं वसुदेवं यशोदासहितं नन्दं श्रीकृष्णसहितं बलदेवं चण्डिकां च प्रतिमासु पूजयेत्।

तत्रादौ—

"गायद्भिः किन्नराद्यैः सततपरिवृतां वेणुवीणानिनादैः
शृङ्गारादर्शकुन्तप्रवरकृतकरैः किंकरैः सेव्यमाना॥
पर्यङ्के स्वास्तृते या मुदिततरमुखी पुत्रिणी सम्यगास्ते
सा देवी देवमाता जयति सुवदना देवकी दिव्यरूपा"॥

इति देवकीं ध्यात्वा,

"मां चापि बालकं सुतं पर्यङ्के स्तनपायिनम्।
श्रीवत्सवक्षसं शान्तं नीलोत्पलदलच्छविम्"॥

इति कृष्णं च ध्यात्वा,

"प्रणवादिनमस्यान्तं पृथङ् नामानुकीर्तयन् ।
कुर्यात्पूजां विधिज्ञश्च सर्वपापापनुत्तये ॥
देवक्यै वसुदेवाय वासुदेवाय चैव हि ।
बलदेवाय नन्दाय यशोदायै पृथक् पृथक्" ॥

इति भविष्योत्तरवचनात्—

ॐ देवक्यै नम इति देवकीम्, ॐ वासुदेवाय नम इति श्रीकृष्णम्,

"पादावभ्यञ्जयन्ती श्रीर्देवक्याश्चरणान्तिके ।
निषण्णा पङ्कजे पूज्या नमो देव्यै श्रियै इति" ॥

इति वचनात्—

ॐ नमो देव्यै श्रियै इति श्रियम्, ॐ देवक्यै नमः, ॐ वसुदेवाय नमः, ॐ यशोदायै नमः, ॐ नन्दाय नमः, ॐ वासुदेवाय नमः, ॐ बलदेवाय नमः, ॐ चण्डिकायै नमः, इति तत्तन्नामभिः पीठान्तरस्थान् देवक्यादींश्चावाहनासनपाद्यार्घ्याचमनीयपञ्चगव्यस्नपनस्नानवस्त्रयज्ञोपवीतगन्धपुष्पधूपदीपनैवेद्यनमस्कारप्रदक्षिणोद्वासनाख्यैः षोड़शोपचारैः पूजयेत्। तत्रोद्वासनं द्वितीयदिने। पूजासाद्गुण्यार्थं ताम्बूलं दक्षिणां च दद्यात्।

भविष्योत्तर एव "विध्यन्तरमपीच्छन्ति केचिदत्रैव सूरयः" इत्युक्त्वा केषुचिदुपचारेषु विशेषमन्त्रा अप्युक्ताः।

यथा—

"योगेश्वराय देवाय योगिनां पतये विभो ।
योगोद्भवाय नित्याय गोविन्दाय नमो नमः" ॥ इति स्नाने ।

"यज्ञेश्वराय देवाय तथा यज्ञोद्भवाय च ।
यज्ञानां पतये नाथ गोविन्दाय नमो नमः" ॥ इति धूपादौ ।

"विश्वेश्वराय विश्वाय तथा विश्वोद्भवाय च ।
विश्वस्य पतये तुभ्यं गोविन्दाय नमो नमः" ॥ इति नैवेद्ये ।

गरुड़पुराणे तु "यज्ञाय यज्ञेश्वराय यज्ञपतये यज्ञसंभवाय गोविन्दाय नमो नमः" इत्यर्घ्ये, "योगाय योगेश्वराये" त्यादि— स्नाने, "विश्वाय विश्वेश्वराये" त्यादि नैवेद्ये, "धर्माय धर्मेश्वराये" त्यादिस्वाहान्तो घृताक्ततिलहोमे, "विश्वाय विश्वेश्वराये" त्यादि— शयने, "सोमाय सोमेश्वराये" त्यादिचन्द्रपूजायां मन्त्रा उक्ताः । ततो गव्यघृतेनाग्नौ वसोर्द्धारा कार्या । क्वचिद्गुडघृतेनेति । ततो जातकर्मनालच्छेदनं षष्ठीपूजनं नामकर्म च संक्षेपेण कार्यम् । ततश्चन्द्रोदये रोहिणीयुतं चन्द्रं स्थण्डिले प्रतिमायां नाममन्त्रेण संपूज्य—

"शङ्खे तोयं समादाय सपुष्पकुशचन्दनम् ।
जानुभ्यां धरणीं गत्वा चन्द्रायार्घ्यं निवेदयेत्" ॥
"क्षीरोदार्णवसंभूत अत्रिनेत्रसमुद्भव ।
गृहाणार्घ्यं शशाङ्केमं रोहिण्या सहितो मम" ॥ इति मन्त्रेण ।

ततो—

"ज्योत्स्नायाः पतये तुभ्यं ज्योतिषां पतये नमः ।
नमस्ते रोहिणीकान्त सुधावास नमोस्तु ते ॥
नभोमण्डलदीपाय शिरोरत्नाय धूर्जटेः ।
कलाभिर्वर्धमानाय नमश्चन्द्राय चारवे" ॥

इति मन्त्राभ्यां प्रणमेत् । ततः—

"अनर्घं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम् ।
वासुदेवं हृषीकेशं माधवं मधुसूदनम् ॥
वाराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् ।
दामोदरं पद्मनाभं केशवं गरुडध्वजम् ॥
गोविन्दमच्युतं कृष्णमनन्तमपराजितम् ।
अधोक्षजं जगद्बीजं सर्गस्थित्यन्तकारिणम् ॥
अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् ।
नारायणं चतुर्बाहुं शङ्खचक्रगदाधरम् ॥
पीताम्बरधरं नित्यं वनमालाविभूषितम् ।
श्रीवत्साङ्कं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिम् ॥
प्रपद्येऽहं सदा देवं सर्वकामप्रसिद्धये ।
प्रणमामि सदा देवं वासुदेवं जगत्पतिम्" ॥

इति मन्त्रैर्नामकीर्त्तनपूर्वकं प्रणम्य,

"त्राहि मां सर्वलोकेश हरे संसारसागरात् ।
त्राहि मां सर्वपापघ्न दुःखशोकार्णवात्प्रभो ॥
सर्वलोकेश्वर त्राहि पतितं मां भवार्णवे ।
देवकीनन्दन श्रीश हरे संसारसागरात् ॥
त्राहि मां सर्वदुःखघ्न रोगशोकार्णवाद्धरे ।
दुर्गतांस्त्रायसे विष्णो ये स्मरन्ति सकृत्सकृत् ॥
सोऽहं देवातिदुर्वृत्तस्त्राहि मां शोकसागरात् ।
पुष्कराक्ष निमग्नोऽहं मायाविज्ञानसागरे ॥
त्राहि मां देवदेवेश त्वत्तो नान्योऽस्ति रक्षिता ।
यद्बाल्ये यच्च कौमारे यौवने यच्च वार्द्धके ॥
तत्पुण्यं वृद्धिमाप्नोतु पापं हन हलायुध" ।

इति मन्त्रैः प्रार्थयेत् ।

ततः स्तोत्रपुराणपठनश्रवणादिभी रात्रिशेषमतिवाह्य परदिने प्रातः स्नानादिनित्यकृत्यं विधाय पुनः सपरिवारं श्रीकृष्णं यथासंभवं सम्पूज्य चण्डिकायाश्च यथाविभवं महोत्सवं कृत्वा यथाशक्ति ब्राह्मणान् भोजयित्वा तेभ्यः सुवर्णमेदिनीधेनुवस्त्रादि यद्यदिष्टं तत् "कृष्णो मे प्रियता"मिति दत्त्वा,

"यं देवं देवकी देवी वसुदेवादजीजनत्।
भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः॥
सुजन्मवासुदेवाय गोब्राह्मणहिताय च।
शान्तिरस्तु शिवं चास्तु"

इत्युक्त्वा ब्राह्मणान्विसृज्येष्टैः सह स्वयं पारणां कृत्वा व्रतं समापयेत्।

क्वचित्पारणायां समाप्तौ च मन्त्रावप्युक्तौ। "सर्वाय सर्वेश्वराय सर्वपतये सर्वसंभवाय गोविन्दाय नमो नमः" इतिपारणायाम्। "भूताय भूतपतये" इत्यादि समापने। प्रतिमाश्च दानानुक्तेः स्थाप्यास्ता एव च प्रतिवर्षं पूज्याः। पारणातः पूर्वमुद्वासनान्तरं देया इति केचित्। उद्यापनं त्वेतस्य यावज्जीविकत्वादनुक्तत्वाच्च नास्ति। उपवासदिननियमांस्तत्पूर्वोत्तरदिननियमानाशौचरजोदर्शनादिषु चानुष्ठानप्रकारादि एकादशीप्रकरणे वक्ष्यामः।

अस्यामेवाष्टम्यां रोहिणीयुतायां जयन्त्याख्यायां प्रकारविशेषेण पूजायां राजसूयफलसमफलभोगोत्तरं विष्णुसालोक्यप्राप्तिः पुत्रधनादिसर्वकामावाप्तिः सकलपातकक्षयश्च फलम्।

प्रकारविशेषश्च शुद्धायां सप्तमीयुतायां वा निशीथे रोहिणीयुतायामष्टम्यामारभ्य संवत्सरपूर्तिं यावत्प्रतिमासं शुक्लाष्टम्यां प्रथमपूजावत् पूजा। अन्ते च गोरत्नालङ्कृतसोपस्करशय्यादानं प्रतिमादानं च। प्रतिमा चोत्सङ्गावस्थितचतुर्भुजबालरूपश्रीकृष्णाया

देवक्याः। चन्द्रार्घ्यदानं च सौवर्णेन राजतेन वा पात्रेण शङ्खेन वा द्वादशाङ्गुलविस्तारे रूप्यमये मण्डले। ततः पुनः सकृष्णां देवकीं पूजयित्वा,

"प्रणमे देवजननीं त्वया जातस्तु वामनः।
वसुदेवात्तथा कृष्णो नमस्तुभ्यं नमो नमः॥
सपुत्रार्घं प्रदत्तं मे गृहाणेमं नमोऽस्तु ते"।

इत्यर्घ्यं च तस्यै दत्वा,

"अदितिर्देवमाता त्वं वसुदेवस्तु कश्यपः।
अजीजनस्त्वमीडेऽहं वासुदेवं सनातनम्"॥

इति प्रणमेत्।

ततो जागरादि। स्त्रियश्च यवगोधूमाङ्कुरगोरसादिभिर्जागरान्तां पूजां कृत्वा तद्रात्र्यरुणोदये रक्तवस्त्रपरिधानाः पुष्पचन्दनकुङ्कुमभूषणादिभिरलङ्कृताः स्वां स्वां प्रतिमां गृहीत्वा तया सह नदीतीरं गच्छेयुर्महत्सरो वा। तत्र च प्रतिमां स्नापयित्वा स्वयं च स्नात्वा कञ्चित्कालं विहृत्य प्रतिमया सह स्वं स्वं गृहं गत्वा मध्वाज्यमरिचेक्षुविकारसंस्कृतं यवान्नं बन्धुभिः सह भुञ्जीरन्।

एवमेव श्रीरामनवमीव्रते श्रीरामचन्द्रस्यापि पूजनम्। मन्त्रेषु अङ्गदेवतासु च विशेषः। यथा श्रीरामचन्द्रप्रीतये श्रीरामनवमीव्रतमहं करिष्ये।

"उपोष्ये नवमीं त्वद्य यामेष्वष्टसु राघव।
तेन प्रीतो भव त्वं भोः संसारात्त्राहि मां हरे"॥

इति संकल्पे।

"कोमलाङ्गं विशालाक्षमिन्द्रनीलसमप्रभम् ।
दक्षिणाङ्के दशरथं पुत्रावेष्टनतत्परम् ॥
पृष्ठतो लक्ष्मणं देवं सच्छत्रं कनकप्रभम् ।
पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ ॥
अग्रे व्यग्रं हनूमन्तं रामानुग्रहकाङ्क्षिणम्" । इति ध्यानम् ।

श्रीरामप्रतिमासमीपे षट्कोणमध्ये कौशल्यां दशरथं च पूजयेत् । षट्कोणकोणेषु राँ हृदयाय नमः, रीँ शिरसे स्वाहा, रूँ शिखायै वषट्, रैँ कवचाय हूँ, रौँ नेत्रत्रयाय वौषट्, रः अस्त्राय फट्, इति हृदयादीनि षट् । षट्कोणवाह्याष्टदलकमलदलमूलेषु हनूमन्तं सुग्रीवं भरतं विभीषणं लक्ष्मणमङ्गदं शत्रुघ्नं जाम्बवन्तं च, दलमध्येषु धृष्टिं जयन्तं विजयं सुराष्ट्रं राष्ट्रवर्द्धनमकोपं धर्मपालं सुमन्त्रं च, दलाग्रेषु इन्द्रमग्निं यमं निर्ऋतिं वरुणं वायुं कुवेरमीशानं चाष्टौ लोकपालान्, तदग्रे वज्रं शक्तिं दण्डं खड्गं पाशमङ्कुशं गदां शूलं चेति तेषामायुधानि च पूजयेत् । श्रीरामपूजायां मूलमन्त्रो वैदिको वा वैष्णवः प्रणवादिचतुर्थ्यन्तनमोऽन्तं नाम वा मन्त्रः ।

"इन्द्रोऽग्निश्च यमश्चैव नैर्ऋतो वरुणोऽनिलः ।
कुवेर ईशो ब्रह्मापि दिक्पालाः स्नापयन्तु ते" ॥ इति च स्नाने ।
"रामस्य जननी चासि रामात्मकमिदं जगत् ।
अतस्त्वां पूजयिष्यामि लोकमातर्नमोऽस्तु ते" ॥

इति कौशल्यापूजायाम् । ॐ नमो दशरथायेति दशरथपूजा— याम् । इतरेषां मूलमन्त्राः प्रणवादिचतुर्थ्यन्तनमोऽन्तनामानि वा ।

"उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुदिने मेषं गते पूषणि ॥

निर्दग्धुं निखिलाः पलाशसमिधो मध्यादयोध्यारणे—
राविर्भूतमभूतपूर्वविभवं यत्किञ्चिदेकं महः" ॥ इति ॥

मध्याह्ने जन्मभावना वाद्यादिवादनं च । पुष्पाञ्जलेः पूर्वम्—

"फलपुष्पाम्बुसंपूर्णं गृहीत्वा शङ्खमुत्तमम् ।
अशोकरक्तकुसुमैर्युक्तं च तुलसीदलैः ॥
दशाननवधार्थाय धर्मसंस्थापनाय च ।
दानवानां विनाशाय दैत्यानां निधनाय च ॥
परित्राणाय साधूनां जातो रामः स्वयं हरिः ।
गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितो मम" ॥

इति मन्त्रेणार्घ्यं दद्यात् ।

ततः—

"पुष्पाञ्जलिं पुनर्दत्त्वा यामे यामे ह्यतन्द्रितः ।
पूजयन्विधिवद्भक्त्या दिवा रात्रिं नयेद्बुधः" ॥

अन्यत्सर्वं जन्माष्टमीवत् । इत्थं यथामति जन्माष्टमी निर्णीता ।

## अथैकादश्यां विशेषविवेचनम् ।

अथैकादशी निर्णीयते । तत्रैकादश्यां येषु तावद्वचनेषूपवसति-श्रवणं तत्राहोरात्रावच्छिन्नाभोजनसंकल्परूपव्रतविधानं स्पष्टमेव । उपवासशब्दस्य व्रतविशेषवाचित्वात् । व्रतशब्दस्य च संकल्पविशेष-वाचित्वात् । येष्वपि नञ्भुजिश्रवणं तानि द्विविधानि । कानिचिद्-व्रतधर्मादिशब्दसमभिव्याहारवन्ति कानिचित्तद्रहितानि । तत्र पूर्वेषां पूर्वतुल्यतैव । "नेक्षेतोद्यन्तमादित्यम्" इत्यादिवत्संकल्पलक्षणया ।

तच्छेषभूता भोजननिन्दापि तत्र न हि, निन्दान्यायेन विधेयसत्य-संकल्परूपव्रतस्तुत्यर्थैव। व्रतादिशब्दसमभिव्याहारशून्यानां तु स्पष्टनिषेधरूपाणां निन्दोन्नेयनिषेधानां वा वचनानां निषेधपरत्वे । तत्र संकल्पलक्षणायां नञः प्रधानाख्यातान्वयत्यागे च कारणाभावात्। न च मूलान्तरकल्पनागौरवपरिहाराय पूर्ववचनैकवाक्यत्वार्थं तदुभयाश्रयणं युक्तम्। तस्योत्तरभावित्वेनानुपस्थितत्वात्। अन्यथा (१) निषादस्थपतावपि विद्याप्रयुक्तिगौरवपरिहाराय तत्पुरुषस्वीकारापत्तेः। तेनोपनयनोत्तरं सर्वैरपि शक्तैः पक्षद्वयेऽपि पूर्वोक्तन्यायेन कालमात्रावच्छेदेन भोजनं वर्जनीयमेव।

भोजनशब्दश्च लोकेऽभ्यवहरणविशेषे प्रसिद्धः। फलादिभक्षणे भोजनशब्दप्रयोगाभावादिति तस्यैव वर्जनमिति यद्यपि प्रतिभाति। तथापि कृष्णविद्धैकादश्यादिषु व्रतरूपोपवासनिषेधे भोजननिषेध-वशाच्च सकलादनीयवर्जने प्राप्ते उपवासनिषेधे तु "किञ्चिद्भक्ष्यं प्रकल्पये"दिति वचनेन फलादिभक्षणविधानादौत्सर्गिकस्य भोजननिषेधस्य सकलादनीयाभ्यवहरणविषयतावसीयते। एतद्वचनवशादपि व्रतविध्यतिरिक्तः सर्वपुरुषसाधारणः सर्वैकादशीसाधारणश्च निषेधोऽवश्यमङ्गीकरणीयः। अन्यथा संक्रान्तिरविवारादिष्विवोपवास-निषेधेऽपि भोजनस्यैव संभवात्किञ्चिद्भक्षणविधानस्यानपेक्षितत्वा-दनुपपत्तेः। अनपेक्षायामपि विधौ संक्रान्त्यादावपि तदापत्तेः।

---

(१) "वास्तुमयं रौद्रं चरुं निर्वपेत्" इति प्रकृत्य "एतया निषाद-स्थपतिं याजयेत्" इति श्रूयते। अत्र निषादस्थपतिशब्दे षष्ठीतत्पुरुष-समासो न स्वीक्रियते। निषादश्चासौ स्थपतिश्चेति कर्मधारयस्य मुख्यत्वात्। षष्ठीसमासे तु संकीर्णजातिविशेषवाचिना निषादशब्देन तत्सम्बन्ध उपलक्ष्येत। न त्वयं कर्मधारये दोषोऽस्ति। ततस्तात्कालिकाचार्योपदेशादिना विद्यां संपाद्य धनिको निषादो रौद्रयागं कुर्यादिति स्पष्टं निषादस्थपत्यधिकरणे। (६ अ० १ पा० १३ अधि०)

सति तु निषेधे तत्परिपालनाय प्रवृत्तस्य निवृत्तेरपि संकल्पाविनाभावस्य (१) प्रजापतिव्रतनये उक्तत्वात्।

"इति विज्ञाय कुर्वीत नावश्यमेकादशीव्रतम्।
विशेषनियमाशक्तोऽहोरात्रं भुक्तिवर्जितः" ॥

इति वचनाद्विशेषनियमरहितभोजनद्वयवर्जनसंकल्परूपनित्यव्रतस्याप्यनुषङ्गात्प्रसक्तेरुपवासनिषेधातिक्रमशङ्कानिवृत्तये युक्तः किञ्चिद्भक्षणविधिः। अत एव तस्यैवोत्तरार्द्धं "न दुष्यत्युपवासेन उपवासफलं लभे" दिति। उपवासेन निषेधेऽनुष्ठीयमाने आनुषङ्गिकनित्यव्रतरूपतदनुष्ठानेन निषेधातिक्रमाद्यो दोषः प्रसक्तस्तेन प्राप्नोति उपवासफलं भोजननिवृत्तिरूपनिषेधफलं च। प्रत्यवायपरिहाररूपं लभेदित्यर्थः। न तु विश्वजितेव सत्रफलं किञ्चिद्भक्षणेन व्रतरूपोपवासफलं पापक्षयरूपमकरणं प्रत्यवायपरिहाररूपं वा

(१) प्रजापतिव्रतन्यायस्वरूपम्—"तस्य व्रतम्" इत्युपक्रम्य "नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन" इत्याम्नातत्वादनीक्षणरूपं किञ्चिदनुष्ठेयम्। तच्च पर्युदासत्वे सत्यवकल्पते। ईक्षणस्याभावः प्रतिषेधपक्षे नञर्थः। पर्युदासपक्षे त्वीक्षणादितरः संकल्पो नञ्पदेन लक्ष्यते। स च संकल्पोऽत्रानुष्ठेयव्रतत्वेन विधीयते। यद्यपीक्षणादितरे बहवो व्यापारा अनुष्ठानयोग्याः सन्ति, तथापि कायिकवाचिकव्यापारविशेषस्याप्रतीयमानत्वात्, मानसस्य व्यापारस्यावर्जनीयत्वाच्च संकल्प एव परिशिष्यते। संकल्पनीयश्चार्थः प्रत्यासत्त्या धात्वर्थ—निषेधः। तथा सति "उद्यन्तं" "अस्तं यन्तं चादित्यं नेक्षिष्ये" इत्येवं रूपः संकल्पोऽत्रानुष्ठेयत्वेन विधीयते। न च तस्य संकल्पस्य क्रत्वङ्गत्वम्, तद्बोधकश्रुतिलिङ्गादिप्रमाणाभावात्। न च पुरुषार्थत्वेऽपि प्रमाणाभावः, "एतावता हैनसा मुक्तो भवति" इत्यनेन वाक्येनेक्षितुः पुरुषस्य प्रत्यवायसम्बन्धमुपन्यस्य तत्प्रत्यवायनिवारणफलस्यानीक्षणसंकल्पस्य विधानेन पुरुषार्थत्वावगमात्। क्रत्वङ्गविवक्षायां तु क्रतुवैकल्यरूपो विपक्षबाध उपन्यस्येत। तस्मादनीक्षणसंकल्पादीनि प्रजापतिव्रतानि पुरुषार्थानि।

[ जैमिनीयन्यायमाला ४ । १ । ३ ]

प्राप्नोतीति। कृष्णविद्धादावुपवासप्राप्तेरेवाभावात्। प्राप्तौ वा "न दुष्यती" त्येतद्विरोधात्। निषिद्धत्वे हि तदतिक्रमे दोषः स्यात्।

यद्यपि च "दीक्षितो न ददाती" त्यत्र विधिनिषेधयोः क्रतुपुरुषार्थत्वेन भिन्नविषयत्वाद्वार्तिककृन्मते यथा विकल्पाप्रसक्तिस्तथेह पुरुषार्थमात्रत्वान्न संभवतीति निषेधत्वे विकल्पस्यावश्यंप्रसक्तेर्विद्धादिभिन्नां गृहस्थादिभिन्नो वोपवसेदिति पर्युदासा एव कृष्णविद्धादिनिषेधाः। तथापि तुल्यफलत्वान्निषेधत्वोक्तिरिति।

तथा च सकलादनीयादननिषेधे सति "अन्नमश्रित्य तिष्ठन्तीति" निन्दावाक्यगतोऽन्नशब्दो "न पचेदन्नमात्मनः" इतिवददनीयमात्रपर एव। तत्र निषेधः कलञ्जभक्षणादिनिषेधवत्षाष्ठन्यायेन नित्य एव। व्रते तु संयोगपृथक्त्वादुभयरूपं नित्यं काम्यं च। तस्य चोभयरूपस्यापि निषेधस्य चैकदिने प्राप्तौ व्रतानुष्ठानेनैव निषेधपरिपालनस्यापि सिद्धिः। तथा चोक्तं कालादर्शादिषु "सिद्धिस्तस्यार्थतो व्रते" इति। निषेधपरिपालनस्य तिथ्युपक्रमावसानपरिच्छिन्नत्वाद्व्रतस्य च पूज्यतिथिगामित्वात्पूर्वापरदिनयोः कृष्णपक्षे च गृहस्थानां केवलनिषेधस्य प्राप्तौ पूर्वदिने स्वतः शास्त्रतो वा विद्धत्वेन कृष्णपक्षे चोपवासनिषेधादुपवासनिषेधे त्वितिफलादिभक्षणेन निषेधपरिपालनम्। उत्तरदिने च व्रतानुष्ठानं शुक्लपक्षे। अशक्तं तु प्रतिकर्तृ क्रियानुकल्पादि वक्ष्यते।

एवं निषेधे व्रते च पृथक्स्थिते निषेधे तावत्पक्षद्वयेऽपि सर्वेषामधिकारः।

"अष्टवर्षाधिको मर्त्यो ह्यशीतिर्न च पूर्यते।
यो भुङ्क्ते मामके राष्ट्रे विष्णोरहनि पापकृत्॥
स मे वध्यश्च दण्ड्यश्च निर्वास्यो देशतः स मे"।

इति नारदीयवचनात्।

"गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च ॥
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि" ॥

इत्यग्निपुराणाच्च ।

यत्तु—

"गृहस्थो ब्रह्मचारी च योऽनश्नंस्तु तपश्चरेत् ।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः" ॥ इति ।
"आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम्" ॥

इति च वचनम् ।

तत्र पूर्वं तावदनच्छिन्नावृत्त्यानुष्ठीयमानमासोपवासादिविषयम् । "अनश्न" न्निति वर्त्तमानकालवाचिप्रत्ययेनाभ्यासप्रतीतेः । "कौटसाक्ष्यं तु कुर्वाणान्" इत्यादौ तथा व्याख्यानात् ।

अत एव च—

"शरीरं पीड्यते येन शुभेनापि च कर्मणा ।
अत्यन्तं तन्न कर्त्तव्यमनायासः स उच्यते" ॥

इत्येवं लक्षणकोऽनायासोऽष्टसु गृहस्थगुणेषूक्तः । अत एव च भारतेऽपि भीष्मवचः—

"मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः ।
आत्मतन्त्रोपघातस्तु न तपस्तत्सतां मतम्" ॥ इति ।

तत्तन्मासोपवासादिविधिविरोधात्सर्वेषां तन्निषेधायोगादत्राप्यधिकारिविशेषापेक्षायां पूर्ववाक्यैकवाक्यत्वादात्मतन्त्रोपघात इत्युक्तत्वाच्च श्रौतस्मार्ताधिकारिप्रतीतिः । तन्त्रशब्दस्य प्रधानकर्मवाचित्वेन पौराणधर्मापेक्षया बलवतां धर्माणां बाधप्रसङ्गस्य तादृशतपोनिषेधहेतुत्वप्रतीतेः ।

ततश्च ब्रह्मचारिगृहस्थाभ्यां प्राजापत्यादावपि क्रियमाणे स्वस्थानविवृद्धिपक्षो नाश्रयणीयः । संलग्नोपवासत्रयापत्तेः । किन्तु दण्डकलितवत्पक्ष एवेति । "प्राणाग्निहोत्रलोपेन" इति त्वर्थवादमात्रम् । न हि तत्र "यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्" इत्याद्युपासनाविशेषरूपप्राणाग्निहोत्रविधौ परिषेचनादिपूर्वकप्राणाय स्वाहा पानाय स्वाहेत्यादिभोजनाङ्गपञ्चाहुत्यादिरूपप्राणाग्निहोत्रविधौ वा भोजनं विधीयते । येन तल्लोपेनावकीर्णिता वस्तुतः स्यात् । किं तु रागप्राप्तभोजनाश्रितो गुणविशेषः फलार्थं तदङ्गं वा विधीयते । तत्र विधिवशान्निषेधवशाद्वा भोजनाभावे आश्रयाभावादेव प्राणाग्निहोत्रस्याप्यननुष्ठाने न विधिविरोधः कश्चित् ।

न च प्राणाग्निहोत्रशब्देनाश्रयीभूतभोजनमात्राभिधानात् "सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम्" इत्यस्य च तन्नियमविधित्वव्याख्यानात्तस्य चोत्तराश्रमिणश्चतुर्थकालिकत्वैकभुक्तादिविधानेन ब्रह्मचारिगृहस्थमात्रविषयत्वादस्त्येव तल्लोपे तयोर्दोष इति वाच्यम् । तस्यापि सामान्यरूपस्य नियमविधेर्विशेषविधिनिषेधाभ्यां काम्यविधिना वा बाधसंभवात् । अनेनैवाभिप्रायेणैतदनन्तरमेव बौधायनेन "प्रायश्चित्तादन्यत्रे"त्युक्तम् । तस्मात् "तेन ह्यन्नं क्रियते" इतिवद्धेत्वर्थवाद एवायम् ।

हेमाद्रिस्तु "मरणान्तिकानशनादिरूपतपोविषयमिदम् । प्राणाग्निहोत्रलोपेनेति च प्राणलोपेनाग्निहोत्रलोपेन चेत्यर्थः । ततश्चोत्तराश्रमिणस्तादृशेन तपसा प्राणलोपे तत्कृते च वानप्रस्थस्याग्निहोत्रलोपेऽपि न दोषः । प्राणेषु विरक्तस्य कर्माशक्तस्यैव च तद्विधानात् । पूर्णाश्रमिणस्तु प्राणानामग्निहोत्रादिकर्मणां च लोपे महान्दोषः ।

"धर्मार्थकाममोक्षाणां प्राणाः संस्थितिहेतवः ।
तान्निघ्नता किं न हतं रक्षता किं न रक्षितम्" ॥ इति ॥

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः, इति च वचनाभ्यां प्राणकर्मणामबाधनीयत्वप्रतिपादिना" दित्याह ।

उत्तरं तु वचनमुपवासेनाशक्त्याध्ययनाग्निहोत्रादिस्वकर्मानुष्ठानस्य लोपे प्रतिनिधिद्वारकत्वे वा प्रसक्ते काम्योपवासस्य नित्यस्य च मुख्यस्याहिताग्न्यादेर्निषेधार्थम्। युक्तं च श्रौतविरोधे स्मार्तस्याननुष्ठानमेव। गौणपक्षेण वानुष्ठानम्। तत्र काम्यस्य गौणपक्षेणानुष्ठानासंभवादननुष्ठानमेव । नित्यस्य तु यथा कथञ्चिदनुष्ठानम् । अनडुद्ग्रहणं च दृष्टान्तत्वेनामुमेवार्थं द्योतयतीति ।

यत्तु काम्यस्य नित्याद्बलीयस्त्वान्नित्यस्यैव बाधो न तु काम्यस्येति हेमाद्रिणोक्तम् । तदयुक्तम् । परस्परविरोधे हि तत् । श्रौतबाधप्रसङ्गे तु काम्यस्यापि स्मार्त्तस्य दुर्बलत्वमेवेति । अत एव चात्मनो नोपरोधं कुर्याद्यथा कर्मसु समर्थः स्यादिति प्रस्तुत्यापस्तम्बेनेदमुक्तम्- "आहिताग्निरनड्वांश्चे" त्यादि ।

यत्तु कश्चित् "आहिताग्निरनड्वांश्चे" त्यनशननिषेधादाहिताग्न्यादीनां सम्पूर्णभोजने प्राप्ते प्राणाग्निहोत्रलोपेनेति प्राणाद्याहुतिलोप एव दोषश्रवणात्तावन्मात्रं तेषामुपवासदिने भवती" त्याह तदयुक्तम् । भोजनस्यैवाप्राप्तौ तदङ्गलोपे दोषस्याप्रमाणकत्वात् । "अश्नन्त एव सिध्यन्ती" ति तत्तदसाधारणकार्यसिद्धेः पञ्चाहुतिमात्रेणासंभवाच्च । व्रते तु पक्षद्वयगतेऽपि नित्ये गृहस्थव्यतिरिक्तानामबालवृद्धातुराणामधिकारः ।

"एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही" ॥

इति देवलवचनात् ।

"यथा शुक्ला तथा कृष्णा द्वादशी मे सदा प्रिया ।
शुक्ला गृहस्थैः कर्त्तव्या भोगसन्तानवर्धनी ॥

मुमुक्षुभिस्तथा कृष्णा तेन तेनोपदर्शिना" ।

इति भविष्यत्पुराणञ्च ।

एवं च—

"अष्टवर्षाधिको मर्त्यो ह्यपूर्णाशीतिवत्सरः ।
एकादशीमुपवसेत्पक्षयोरुभयोरपि" ॥

इति कात्यायनवचनमपि गृहस्थव्यतिरिक्तविषयमेव । अष्टवर्षग्रहणं च विधिनिषेधगतमुपनीतोपलक्षणम् । अपि वा "वेदतुल्यत्वादुपायेन प्रवर्त्तेरन्" इति न्यायात् । एतेषु च वचनेषु "धर्मोऽयम्" "कर्त्तव्या" "उपवसेत्" इत्यादि शब्दैर्व्रतप्रतीतिः । तेन "यथा शुक्ला तथा कृष्णा विशेषो नास्ति कश्चने" त्यादीनि बहूनि शुक्लकृष्णोभयैकादशीविषयाणि वचनानि गृहस्थातिरिक्तविषयाण्येव भवन्ति । पूर्ववचनैस्तत्रैवोपसंहारात् । स चोपसंहारः सत्यपि पक्षद्वयोपादाने कृष्णायामपि य उपवासः स गृहस्थव्यतिरिक्तानामित्येवं कृष्णाकटाक्षेणैव । "शुक्लामेव सदा गृही"त्येतत्समभिव्याहारेण तथा तात्पर्यग्रहात् ।

तथा हि "षड्विंशतिरित्येव ब्रूयात्" इतिवदेवकारोपबन्धादनुवादत्वं तावदस्य प्रतीयते । तद्यथा भवति तथा पूर्ववाक्यार्थो वर्णनीयः । उभयैकादश्याश्च वनस्थादिविषयत्वेनोपसंहारे गृहस्थस्य शुक्लाप्यप्राप्तेति वाक्यभेदैवकारानर्थक्यापादकं "शुक्लामेव सदा गृही"त्यस्य विधित्वमवश्यं स्यात् । तेन यथा (१) "षड्विंशतिरित्येव ब्रूयात्" इत्यस्यानुवादस्य सामर्थ्यात् "न चतुस्त्रिंशदिति

---

(१)—अश्वमेधे अध्रिगुप्रैषे "चतुस्त्रिंशद्वाजिनः" इत्यादिकाया ऋचः "न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात्" इत्यनेन प्रतिषेधो विधीयते, उत विकल्पः इत्याशङ्क्य विकल्पो विधीयते समस्ताया ऋचः प्रतिषेधश्च । वैशेषिकवचनोपस्थितेरिति निर्णीतं शास्त्रदीपिकायाम् । ( ६ अ० ४ पा० २—३ अधि० )

ब्रूयात्” इत्यस्य वैशेषिकसमस्तर्चप्रतिषेधत्वम्, यथा च (१) “न गिरा गिरेति ब्रूयात्” इति निषेधस्यानुवादत्वाय “ऐरं कृत्वोद्गेयम्” इत्यस्य गिरापदकार्ये इरापदविधिपरत्वं गम्यते, तथैतस्याप्युपसंहारस्य “शुक्लामेव” इत्यनुवादबलात् कृष्णाविषयत्वम्। तेनोभयैकादशी-विषयाणां वचनानां देवलादिवचनैर्वनस्थादिविषयत्वेनानुपसंहारे सामान्यवचनैरेव गृहस्थस्यापि शुक्लाप्राप्तेः “शुक्लामेव सदा गृही” इत्यस्य तत्प्राप्त्यर्थत्वायोगादेवकारेण कृष्णा परिसंख्यार्थता वक्तव्या। सा च त्रैदोष्याद्युक्ता।

उपसंहारे तु सामान्यवचनैर्गृहस्थस्य शुक्लाप्यप्राप्तेति तत्प्राप्त्य-र्थमेव “शुक्लामेव सदा गृही” ति वचनं पृथग्विधिरूपमेव। एवकार-श्चायोगव्यवच्छेदार्थ इति यत्कैश्चिदुक्तं तन्निरस्तं वेदितव्यम्। उपसंहारेऽप्युक्तयुक्त्या कृष्णाकटाक्षेणैवोपसंहारात्सामान्यवचनैरेव गृहस्थ-स्यापि शुक्लायाः प्राप्तेः कृष्णायाश्चाप्राप्तेः शुक्लकृष्णयोः प्राप्तिपरि-संख्यानपेक्षणात्। सत्यपि च परिसंख्यार्थत्वे एवकारेण तस्या एव श्रुतत्वात् “अत्र ह्येवावपन्त्यत एवाद्वयन्तीति” वत्त्रैदोष्याप्रसक्तेः।

वस्तुतस्त्वनुवाद एवायमित्युक्तम्। एवकारादेकवाक्य-त्वाच्चेति। अत एव च वनस्थयतिग्रहणमपि गृहस्थेतरमात्रस्य ब्रह्मचार्यादेरप्युपलक्षणम्। अत एव भविष्योत्तरे ब्रह्मचारिणोऽपि ग्रहणम्—

---

(१)—“यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे” इति ज्योतिष्टोमे श्रूयते। तत्र सामगा योनिगानमधीयानाः सहैव गकारेण गायन्ति ‘गायीरा, ‘गिरा, इति। ब्राह्मणे तु “ऐरं कृत्वोद्गेयम्” इत्यनेन गकारलोपपूर्वकं गानं विधीयते इति। तदत्र गकारसहितं गातव्यमुत गकाररहितमिति संशये उच्यते—“न गिरा गिरेति ब्रूयात्” यद्गिरागिरेति ब्रूयादात्मानमेव तदुद्गाता गिरेत्” इत्यनेन गकारसहितगाननिषेधपुरःसरं गकाररहितस्य इरापदस्य गेयत्वेनोक्तत्वात्। गीयमानस्य गिरापदस्य स्थाने इरापदं विधीयत इत्यभिसन्धिः। [ पू० मी० द० ६। १। १८ अधि० ]

"एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
ब्रह्मचारी च नारी च शुक्लामेव सदा गृही" ॥ इति ।

नारी विधवा ।

"एकादश्यां विना रण्डा यतिश्च सुमहामते ।
पच्यते ह्यन्धतामिस्रे यावदाभूतसंप्लवम्" ॥

इति नारदीयात् ।

यतिसमभिव्याहाराच्चोभयैकादशीविषयमेतत् । विधवाग्रहणाच्च सभर्तृकाया गृहस्थवच्छुक्लायामेवोपवासः । तत्र च विशेषो वक्ष्यते ।

यानि च—

"संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे ।
चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान्गृही" ॥

इत्यादीनि स्वतन्त्राणि बहूनि पुत्रवद्गृहिणः कृष्णैकादश्युपवास-निषेधकानि वचनानि । तानि गृहस्थमात्रस्य कृष्णायामुपवासनिषेधेऽपि पुत्रिणस्तस्य प्रत्यवायातिशयार्थानीति माधवः । तत्तु कृष्णैकादश्युपवासविधेर्वनस्थादिविषयत्वेनोपसंहारे गृहस्थमात्रस्यैव तदप्राप्तेरयुक्तमिति शयनीबोधनीमध्यवर्त्तिकृष्णैकादशीविषयाणीति हेमाद्रिः ।

तत्र हि—

"शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन" ॥

इतिस्मृत्यन्तरवचनेन गृहस्थस्योपवासो विहितः । पुत्रवद्गृहिणः सोऽपि निषिध्यत इति । यद्यपि चानयोपपत्त्या पुत्रवद्गृहिणं प्रति काम्यकृष्णैकादश्युपवासनिषेधकताप्यमीषां वचनानां प्राप्नोति ।

तथापि सा न भवति ।

"पुत्रवांश्च सभार्यश्च बन्धुयुक्तस्तथैव च ।
उभयोः पक्षयोः काम्यं व्रतं कुर्यात्तु वैष्णवम्" ॥

इति हेमाद्र्याद्युदाहृतवचनेन काम्योपवासस्य कृष्णायामपि तं प्रतिविधानात् ।

वस्तुतस्तु नैते निषेधाः । शास्त्रप्राप्तार्थप्रतिषेधे विकल्पप्रसङ्गात् । सामान्यरूपोऽपि हि विधिर्विशेषरूपेणापि निषेधेनोपजीव्यत्वात्तुल्यबल एवेत्युक्तं "प्रतिषेधः प्रदेशेऽनारभ्यविधाने च" इत्यत्र (पू० मी० द० २ । ८ । १) । किन्तु नञः पुत्रवद्गृहिपदान्वयेन पुत्रवद्गृहिभिन्नः संक्रान्तिरविवारग्रहणकृष्णैकादश्यादिषूपवासं कुर्यादित्येवं पर्युदासाः सन्तो वनस्थादिवाक्यसामानार्था एव । ततश्चैतदेकवाक्यत्वात्तद्वाक्यगतं गृहिपदं पुत्रवद्गृहिपरमेव । शयन्यादिवचनं च तस्यैव कृष्णाविशेषे प्रतिप्रसवार्थम् । तथा वक्ष्यमाणलक्षणानां वैष्णवानामपि पुत्रवद्गृहिणां कृष्णायाः प्रतिप्रसवो नारदीये—

"नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ।
पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणम्" ॥ इति ।

तत्त्वसागरेऽपि—

"यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा ।
तुल्येति मन्यते यस्तु स वै वैष्णव उच्यते" ॥ इति ।

या च—

"रविवारेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे ।
पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही" ॥

इत्यादिवचनैर्निषेधेन पर्युदासेन वा रविवारसंक्रान्त्यादौ पुत्रवद्गृहिण उपवासस्य निवृत्तिः क्रियते, सा तत्तन्निमित्तस्य । न तु तदधिकरणकमात्रस्यैकदश्यादिनिमित्तकस्यापि ।

"तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः ।
प्रयुक्त्यन्तरयुक्तस्य न विधिर्न निषेधनम्" ॥

इति जैमिनिवचनात् । अत एव—

"भृगुभानुदिनोपेता सूर्यसंक्रान्तिसंयुता ।
एकादशी सदोपोष्या पुत्रपौत्रप्रवर्द्धिनी" ॥

इति विष्णुधर्मोत्तरम् ।

रविवारादिनिमित्तोपवासविधिश्च संवर्तेनोक्तः—

"अमावस्या द्वादशी च संक्रान्तिश्च विशेषतः ।
एताः प्रशस्तास्तिथयो भानुवारस्तथैव च ॥
अत्र स्नानं जपो होमो देवतानां च पूजनम् ।
उपवासस्तथा दानमेकैकं पावनं स्मृतम्" ॥ इति ।

पारणमपि तत्तन्निमित्तमेव निषिध्यते । तत्र—

"सप्तवारानुपोष्यैव सप्तधा संयुतेन्द्रियः ।
सप्तजन्मकृतात्पापात्तत्क्षणादेव नश्यति" ॥

इति वचनविहितशनिवारप्रयुक्तोपवासाङ्गभूतं तदुत्तरदिने प्राप्तं रविवारप्रयुक्तम् ।

"नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः ।
चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु ॥
अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम् ।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयं च तत्" ॥ इति ॥

संक्रान्त्यादिपूर्वदिनविहितोपवासाङ्गभूतं तदुत्तरदिने प्राप्तं संक्रान्त्यादिनिमित्तकम् । तन्निषेधेन च तदङ्गकपूर्वदिनोपवासनिषेध

एव द्रष्टव्यः। तथा च शनौ रवौ च संक्रान्तिदिनतत्पूर्वदिनयोश्च पुत्रवद्गृहिणोपवासो न कार्य इति पर्यवस्यति।

यच्च—

"व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृही।
श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्ते पितृसेवितम्॥
हविर्देवा न गृह्णन्ति कव्यानि पितरस्तथा"।

इत्यादिवचनैः पित्रादिसांवत्सरिकदिने उपवासनिषेधः। सोऽपि रविवारादिवत्तन्निमित्तोपवासविषयत्वासंभवेऽपि आवश्यकैकादश्याद्युपवासव्यतिरिक्तकाम्यादिविषयः। क्रत्वर्थतया श्राद्धशेषभोजननियमस्य विधानान्निषेधोपवासविध्योश्च रागप्राप्तानियतपुरुषार्थभोजनविषयत्वान्न्यायेन तत्र भोजनस्यैवौचित्येऽपि वचनवशादेवैवम्।

तथा च वृद्धयाज्ञवल्क्यः—

"उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम्"॥ इति।

स्कन्दपुराणेऽपि—

"यस्मिन्दिने पितुः श्राद्धं मातुर्वाथ भवेद्गुह।
तस्मिन्नेव दिने तात भवेदेकादशीव्रतम्॥
अन्यद्वापि व्रतं स्कन्द तदा कार्यं च तच्छृणु।
न लुप्यते यथा श्राद्धमुपवासोऽथवा गुह॥
इति विप्रतिपन्नेऽर्थ उपायः परमो मतः।
दृष्टो हितार्थं सर्वेषां नराणां शिखिवाहन॥
श्राद्धं दिनं समासाद्य उपवासो यदा भवेत्।
तदा कृत्वा तु वै श्राद्धं भुक्तशेषं च यद्भवेत्॥

तत्सर्वं दक्षिणे पाणौ गृहीत्वान्नं शिखिध्वज ।
अवजिघ्रेद्धनेनाथ तेन श्राद्धं शिखिध्वज ॥
पितॄणां तृप्तिदं जातं व्रतभङ्गो न विद्यते” इति ॥

अत एव विधितोऽभोजनेऽपि श्राद्धशेषभोजननियमरूपाङ्गलोपाच्छ्राद्धस्य वैगुण्यं नास्तीत्येतमर्थं ज्ञापयति शिवरहस्यम् ।

“श्राद्धं कृत्वा तु यः शेषं नान्नमश्नाति मन्दधीः ।
लोभान्मोहाद्भयाद्वापि तस्य तन्निष्फलं भवे” दिति ॥

अत्र लोभमोहभयानामुपादानं ज्ञापकम् । अत्र च श्राद्धशेषभोजनविधौ रागप्राप्तं भोजनं नियम्यते । लाघवात् । ऋतुगमनवत् । न त्वपूर्वं भोजनं विधीयते । स च नियमः पुरुषार्थभोजनाश्रितोऽपि प्रकरणाच्छ्राद्धाङ्गम् । ऋत्युपगममांसभक्षणादिप्रतिषेधवत् । तस्य चोपकाराकाङ्क्षायां शेषशब्देन प्रतिपत्त्यर्हकृतार्थश्राद्धीयद्रव्योपस्थपनात्, तस्य च द्वितीयासंयोगाद्दृष्टत्वाच्च, तत्प्रतिपत्तिरेवोपकारः । तेन सर्वस्य श्राद्धीयद्रव्यस्यावैगुण्याय प्रतिपाद्यत्वात्सर्वजातीयं श्राद्धीयमन्नं यजमानेन भोक्तव्यम् । मांसे तु निमन्त्रितवद्यजमानस्य न नियमः । “देवान्पितॄन्समभ्यर्च्य खादन्मांसं न दोषभाग्” इत्युक्तत्वात् ।

अमावास्यायां तु साग्निकेन “अमाषममांसम्” इत्यादिव्रताविरोधेनैव श्राद्धीयमन्नं भोक्तव्यम् । इतरथा व्रतलोपेनेष्टिस्थालीपाकवैगुण्यापत्तेः । अभोजने श्राद्धवैगुण्येऽपि श्रौतत्वेन तस्य बलवत्त्वात् । श्राद्धानधिकारिसाग्निकविषयत्वेनेव व्रतस्य शेषभोजनस्यापि व्रताविरोधिशेषविषयत्वेन संकोचोपपत्तेः । एकाग्निसाध्यानामपि श्रौतत्वं “वैतानौपासनाः कार्याः क्रियाश्च श्रुतिचोदनात्” इत्यत्रोक्तम् ।

उदाहृता च मिताक्षरायां श्रुति “अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठा” दिति ।

आश्वलायनसूत्रवृत्तिकारादिभिश्च तत्र तत्र सौत्रेण श्रुत्याकर्षेणोपपादितं सौत्राणां कर्मणां श्रौतत्वम्। "पूर्वेद्युः पितृभ्यो ददाती"ति श्रुतिस्तु पिण्डपितृयज्ञाभिप्राया।

यद्यपि च कात्यायनेन श्राद्धविषयत्वेनापि "मासि मासि वोऽशनम्"इति श्रुतिराकृष्टा। तथापि सार्थवादरूपा न स्पष्टविधिरूपा। अत एव न केषामपि श्राद्धे श्रौतत्वव्यवहारः। फलार्थेन च तत्तद्वस्तुत्यागरूपेण व्रतेन काम्यत्वात्प्रधानत्वाच्च तत्तच्छ्राद्धीयद्रव्यशेषभोजनबाधः। इदं च सर्वं श्राद्धशेषभोजनस्य प्रतिपत्तिकर्मत्वमभ्युपेत्योक्तम्।

वस्तुतस्तु प्रयोजनापेक्षशेषगुणकमर्थकमेवैतत्। आनुषङ्गिकी तु प्रतिपत्तिः। अभिमतिपक्षे तदर्थत्वानुपपत्तेः। इतरपक्षेऽप्यनुमति—वैयर्थ्यापत्तेश्च। अस्मदीयस्यान्यत्र विनियोगे ह्यनुमतिरपेक्ष्यते। न तु तेष्वेव विनियोगोपयोगिनि संस्कारे। इतराङ्गापेक्षया यजमानभोजनलोपे बहुदोषश्रवणमनुकल्पविधानं च साक्षादङ्गत्वं द्योतयति।

द्वितीया तु धात्वर्थकर्मत्वाभिप्राया। तेन सर्वजातीयशेषाभोजनेऽपि न किंचिच्छ्राद्धस्य वैगुण्यमिति सुतरां व्रताविरोधेन तत्सिद्धम्। अत एव च तीर्थयात्राङ्गघृतश्राद्धे घृतमात्रेणापि शेषभोजनसिद्धिः शिष्टाचारे। इत्यलं प्रसङ्गागतेन।

प्रकृतमनुसरामः। जीवत्पतिका-स्त्री पत्यनुज्ञयैव नित्यं काम्यं वा व्रतादि कुर्यात्। "भार्या भर्तुर्मतेनैव व्रतादीन्याचरेत्सदे"ति कात्यायनवचनात्।

तथा च—

"पत्यौ जीवति या नारी उपवासव्रतं चरेत्।
आयुष्यं हरते भर्तुर्नरकं चैव गच्छति"॥

इति विष्णुवचने यत्तस्या उपवासमात्रे दोषश्रवणं तत्पत्यनुज्ञाभावविषयम्। अत एव स्पष्टं मार्कण्डेयपुराणम्—

"नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा ।
निष्फलं तु भवेत्तस्या यत्करोति व्रतादिकम्" ॥ इति ॥

तेन विधवापि यदधीना तदनुज्ञैव सर्वं कुर्यात्। अत एव सामान्यत एव निषेधो "न स्वातन्त्र्यं क्वचित्स्त्रियाः" इति। पुष्पालङ्कारादित्यागश्च व्रताङ्गत्वेन वक्ष्यमाणस्तस्या नावश्यको जीवत्पतिकायाः।

"पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम्।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम्" ॥

इति मनुवचनात्।

अत्र "स्त्रियाः" इति प्रकृतम्। तथा च रजोदर्शनेऽपि भोजनवर्जनं तदङ्गभूताश्च शारीरा नियमाः स्वयमेव कर्त्तव्याः। देवपूजादिकमन्येन कारयितव्यम्। "एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपी"ति पुलस्त्यवचनात्। अत्र च यद्यपि निषेधमात्रोपादानम्। तथापि "संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम्" इत्यृष्यशृङ्गवचने व्रतमभ्युपात्तम्। मत्स्यपुराणेऽपि—"अन्तरा तु रजोयोगे पूजामन्येन कारयेत्" इति। व्रतान्तरेष्वपि प्रारब्धेष्वेवमेव।

"प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत्।
न तत्रापि व्रतस्य स्यादुपरोधः कदाचन" ॥

इति सत्यव्रतवचनात्।

यद्यपीदं दीर्घकालव्यापिमासोपवासाद्येकप्रयोगविषयमाभाति। तथापि वर्षादिपर्यन्तमभ्यासेन फलसाधनेष्वपि प्रारब्धेषु शक्यत एव योजयितुम्। एवम् "अन्तरा" इत्यपि। एवमाशौचेऽपि सर्वैरेकादशीव्रतमन्यच्च प्रारब्धपूर्ववत्कर्त्तव्यमेव। यच्च तदङ्गभूतं दानहोमाद्यनन्यसाध्यं तदन्ते कर्त्तव्यम्।

"सूतकेऽपि नरः स्नात्वा प्रणम्य मनसा हरिम् ।
एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते ॥
मृतकेऽपि न भुञ्जीत एकादश्यां सदा नरः ।
द्वादश्यां तु समश्नीयात्स्नात्वा विष्णुं प्रणम्य च ॥
पूर्वसंकल्पितं यच्च व्रतं सुनियतव्रतैः ।
तत्कर्त्तव्यं नरैः श्राद्धदानार्चनविवर्जनम्" ॥

इति वाराहपुराणवचनात् ।

अत्र "स्नात्वे" ति शारीरनियमोपलक्षणम् । "मनसे" ति कायिकपूजाया अन्येन कारणीयत्वमुक्तम् । यद्वा सापि दानादिवदन्त एव कर्त्तव्या ।

तथा च मत्स्यपुराणे—

"सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्दनम् ।
दानं दत्वा विधानेन व्रतस्य फलमश्नुते" ॥ इति ॥

दानग्रहणेन ब्राह्मणभोजनमपि गृह्यते । तस्याप्यन्नदानरूपत्वात् ।

अन्यत्रापि—

"सूतकात्प्राक्समारब्धमनेकाहं तु यद्व्रतम् ।
कायिकं तत्तु कुर्वीत न तु दानार्चनं जपम् ॥
सूतकाहे तु यत्किञ्चिद्दानाद्यन्तरितं भवेत् ।
सूतकानन्तरे त्वह्नि तत्कर्त्तव्यमतन्द्रितैः" ॥ इति ।

तथा वैश्यानां शूद्राणां च द्विरात्राधिककालव्याप्युपवासो न भवति ।

"वैश्याः शूद्राश्च ये मोहादुपवासं प्रकुर्वते ।
त्रिरात्रं पञ्चरात्रं वा तेषां व्युष्टिर्न विद्यते" ॥

इति प्राच्यलिखितवचनात् ।

व्युष्टिः फलम् । उपवासाऽसामर्थ्ये त्वनुकल्पो भवति । स च द्विविधः कर्तुः क्रियायाश्च । क्रियाया नक्तैकभक्तादिः । कर्तुः पुत्रभार्यादिः । तत्र क्रियां प्रति प्रधानभूतेऽधिकारांशे प्रतिनिध्यभावात्कर्त्रंशस्य च तां प्रति गुणभूतत्वात्प्रथमं कर्त्रनुकल्पः । तस्याप्यसंभवे क्रियानुकल्प इति न्याय्यम् ।

तथापि—

"सताम्बूलमताम्बूलं सभोजनमभोजनम् ।
साहारं च निराहारं चतुर्विधमुपोषणम्" ॥

तथा "एकभक्तेन यो मर्त्य उपवासव्रतं चरेत्" इत्यादिषु नक्तैकभक्तपयोमूलाद्याहारादिषु लिङ्गसमवायसादृश्याभ्यामुपवासशब्दप्रयोगो यथा मुख्योपवासधर्मातिदेशार्थः, तथा "उपवासमर्थस्त्वि"त्यादिषूपवासशब्देन तेषामपि ग्रहणार्थोऽपि । तेन यथा पुत्रिकासुतादिषु गौणपुत्रशब्दप्रयोगवशात्तेषामप्यभावे "स्वर्यातस्य ह्यपुत्रस्ये"ति विधिः प्रवर्त्तते तथा गौणस्याप्युपवासस्य स्वयं कर्त्तुमसामर्थ्ये कर्त्रनुकल्पविधिः ।

तत्रोपवासानुकल्पः कूर्मपुराणे—

"एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत् ।
पयोमूलफलैर्वापि न निर्द्वादशिको भवेत्" ॥ इति ॥

पयआदीनां पश्चादभिधानेऽप्येकभक्ताद्यपेक्षया मुख्यत्वं द्रष्टव्यम् ।

अत एव वायुपुराणम्—

नक्तं हविष्यान्नमनोदनं वा
फलं तिलाः क्षीरमथाम्बु चाज्यम् ।
यत्पञ्चगव्यं यदि वापि वायुः
प्रशस्तमत्रोत्तरमुत्तरं च" इति ।
नक्तस्याप्यसंभवेऽयाचितमेकभक्तं वा क्रमेण ।

तथा च मार्कण्डेयपुराणम्—

"एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन न निर्द्वादशिको भवेत्" ॥ इति ।

उपवासस्य मुख्यस्यैवात्र ग्रहणमन्येषामुपवासतुल्यत्वप्रदर्शनार्थम् । दानं यथाशक्ति ।

अत एव वायुपुराणे—

"अथवा विप्रमुख्येभ्यो दानं दद्याच्च शक्तितः" इति ।

ब्रह्मवैवर्त्ते दाने विशेषोऽप्युक्तः—

"उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत् ।
तावद्धनादि वा दद्याद्यद्भुक्ताद् द्विगुणं भवेत् ॥
सहस्रसंमितां देवीं जपेद्वा प्राणसंयमात् ।
कुर्याद्द्वादशसंख्याकान्यथाशक्ति व्रते नरः" ॥ इति ॥

फलग्रहणं मूलादेरप्युपलक्षणम् । क्षीरग्रहणं च दध्यादेः । हविष्याणि च व्रतगोचराण्युक्तानि सर्वनिबन्धोदाहृतायां स्मृतौ—

"हैमन्तिकं सिताऽस्विन्नं धान्यं मुद्गास्तिला यवाः ।
कलापकङ्गुनीवारा वास्तूकं हिलमोचिका (१) ॥
षष्टिकाः कालशाकं च मूलकं केमुकेतरत् ।
लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ॥
पयोऽनुद्धृतसारं च पनसाम्रहरीतकी ।
तिन्तिड़ी जीरकं चैव नागरङ्गकपिप्पली ॥
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते" इति ।

अन्यत्रापि—

"नारीकेलफलं चैव कदलीं लवलीं तथा ।
आम्रमामलकं चैव पनसं च हरीतकीम् ॥
व्रतान्तरे प्रशस्तं च हविष्यं मन्वते बुधाः" । इति ॥

अत्र च पयोमूलाद्याहारनक्तैकभक्तादीनामुपवासासंभवे विधानेन तत्कार्यापत्त्यवगमादतिदेशात् "एकभक्तेन यो मर्त्य उपवासव्रतं चरे" दित्यादिनामातिदेशाद्वोपवासधर्मप्राप्तेः "एकादश्यां निराहारः" इत्यादिसंकल्पवाक्ये वाय्वाहारः फलाहारो नक्ताहार इत्यादिरूहः कर्त्तव्यः । एतादृशमनुकल्पमपि स्वयं कर्तुमसमर्थस्तु पुत्रादिनोपवासं कारयेत् ।

"असामर्थ्ये शरीरस्य व्रते च समुपस्थिते ।
कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् ॥
भ्रातरं भगिनीं शिष्यं ब्राह्मणं दक्षिणादिभिः" ।

इति स्कन्दपुराणात् । ब्राह्मणं पुरोहितं तदभावेऽन्यमपि ।

---

(१) हिंचाशाकनाम्ना ख्याता ।

"स्वयं कर्त्तुमशक्तश्चेत्कारयेत पुरोधसा ॥
हिरण्यं दक्षिणां दद्यात्स्वशक्त्या वानुरूपतः" ।

इति वायुपुराणात् ।

पुत्रादेश्च पित्राद्यर्थोपवासफलं भवति । न च तस्मै दक्षिणा देया ।

तथा च कात्यायनः—

"पितृमातृस्वसृभ्रातृगुर्वर्थे च विशेषतः ।
उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् ॥
दक्षिणा नात्र दातव्या शुश्रूषाविहिता हि सा ।
नारी च पतिमुद्दिश्य एकादश्यामुपोषिता ॥
पुण्यं शतगुणं यायादिति बौधायनो मुनिः ।
उपवासफलं तस्याः पतिः प्राप्नोत्यसंशयम् ॥
राज्यस्थक्षत्रियार्थे च एकादश्यामुपोषितः ।
पुरोधास्तु क्षत्रियो वा द्वयोः सममितीरितम् ॥
उपवासफलं ताभ्यां समग्रं समवाप्यते ।
मातामहादीनुद्दिश्य एकादश्यामुपोषणे ॥
कृते ते तु फलं विप्राः समग्रं समवाप्नुयुः ।
कर्त्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संशयः ॥
यमुद्दिश्य कृतं सोऽपि सम्पूर्णं फलमाप्नुयात्" ॥ इति ॥

वायुपुराणोक्तं च पुरोधसे दक्षिणादानं तदर्थिने द्रष्टव्यम् । एवमावश्यकस्यैकादशीव्रतस्य शक्तेन बुद्धिपूर्वमकरणे प्रायश्चित्तमुक्तं माधवाद्युदाहृतायां स्मृतौ—

"अष्टम्यां च चतुर्दश्यां दिवा भुक्त्वैन्दवं चरेत् ।
एकादश्यां दिवा रात्रौ नक्तं चैव तु पर्वणि" ॥ इति ॥

तादृशस्मृत्यन्तरेऽपि—

"अर्कपर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा।
एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत्" ॥ इति ॥

अशक्तस्याकामतश्चार्द्धं कल्प्यम्। यद्यपि चेदं प्रायश्चित्तं रविवाराष्टम्यादिसाहचर्य्यान्निषेधातिक्रमे प्रतीयते। तथापि व्रतातिक्रमेऽपीदमेव भवति। उभयातिक्रमस्यापि "भुक्त्वा" इत्यनेन वक्तुं शक्यत्वात्। न हि वारुणेष्टेर्वैदिकलौकिकोभयाश्वदाननिमित्तकत्वे क्रत्वर्थपुरुषार्थत्ववैरूप्यवदत्र व्रतनिषेधोभयातिक्रमनिमित्तकत्वे किञ्चिन्नैमित्तिकविधेर्वैरूप्यम्। व्रतनिषेधयोर्द्वयोरपि पुरुषार्थत्वेन नैमित्तिकस्यापि केवलपुरुषार्थत्वात्।

इदं चैकादशीव्रतं काम्यमपि—

"यदीच्छेद्विष्णुसायुज्यं श्रियं सन्ततिमात्मनः।
एकादशीसमं किञ्चित्पापत्राणं न विद्यते ॥
स्वर्गमोक्षप्रदा ह्येषा राज्यपुत्रप्रदायिनी।
सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनी" ॥

इत्यादिकूर्मनारदीयादिपुराणवचनात्।

अत्र च पूर्वोक्तो द्विविधोऽनुकल्पः प्रारब्धे, न तु नित्यवदुपक्रमेऽपि। न्यायात्।

"काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः।
काम्येऽप्युपक्रमादूर्ध्वं केचित्प्रतिनिधिं विदुः" ॥

इति स्मृतेश्च।

उपवासस्वरूपं च कात्यायनवृद्धवशिष्ठाभ्यां दर्शितम्—

"उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह ।
उपवासः स विज्ञेयः सर्वभोगविवर्जितः" ॥ इति ॥

पापानि वक्ष्यमाणव्रताङ्गनिषेधविषया मैथुनानृतवदनादयः । गुणा वक्ष्यमाणव्रताङ्गविधिविषयाः शौचजपध्यानादयः । सर्वस्य वायुपर्यन्तस्यापि भोगोऽभ्यवहारः । ततश्च पापनिवृत्त्या गुणानुष्ठानेन च सहितो निराहारस्य वासोऽवस्थानमुपवास इत्युक्तं भवति । इदं च फलसाधनस्योपवासस्य स्वरूपम् । उपवासपदार्थस्तु स्मृतिपुराणव्यवहारे रूढ्या निराहारावस्थानमात्रम् । अत एव संकल्पवाक्ये तावन्मात्रमुपात्तम्—

"एकादश्यां निराहारो भूत्वाहमपरेऽहनि ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत" ॥ इति ॥

तत्र व्रताहे वर्जनीयानि तावत् ।

हारीतः—

"पतितपाखण्डिनास्तिकादिसंभाषणानृताश्लीलादिकमुपवासादिषु वर्जनीय" मिति । आदिपदेन यत्पुरुषार्थतया सर्वदा निषिद्धं तदपि क्रत्वर्थतया निषेधाय संगृह्यते ।

अत एव व्रताधिकारे सुमन्तुः—

"विहितस्याननुष्ठानमिन्द्रियाणामनिग्रहः
निषिद्धसेवनं नित्यं वर्जनीयं प्रयत्नतः" ॥ इति ॥

विष्णुधर्मेषु—

"असकृज्जलपानं च दिवास्वापं च मैथुनम् ।
ताम्बूलचर्वणं मांसं वर्जयेद्व्रतवासरे" ॥ इति ॥

मांसादिनिषेधः पारणादिने । "पारणान्तं व्रतं ज्ञेय" मिति तस्यापि व्रतदिनत्वोक्तिसंभवात् । न तु प्रधानदिने । तत्र प्रसक्त्यभावात् । अत एव क्वचिद्वचनं "वर्जयेत्पारणे मांसं व्रताहेऽप्यौषधं सदा" इति ।

"अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्" ॥

इतिवचनात्प्रसक्तमौषधरूपमपि मांसं व्रते वर्जयेदित्यर्थः । अत्यशक्तौ देवलेन जलपानमभ्यनुज्ञातम् ।

"उपवासः प्रणश्येत दिवास्वापान्नमैथुनैः ।
अत्यये चाम्बुपानेन नोपवासः प्रणश्यति" ॥ इति ॥

अत्यये जलपानं विना प्राणात्यये ।

वृद्धवशिष्ठः—

"उपवासे तथा श्राद्धे न कुर्याद्दन्तधावनम्" । काष्ठेनेति शेषः । अत एव तदेव निदन्ति "दन्तानां काष्ठसंयोगो हन्ति सप्त कुलानि वा" इति । वाक्यशेषाच्च विधेरिव निषेधस्यापि विशेषपरता युक्तैव ।

तेन—

"अलाभे वा निषेधे वा काष्ठानां दन्तधावनम् ।
पर्णादिना विशुद्धेन जिह्वोल्लेखः सदैव च" ॥

इति पैठीनसिवचनात्पर्णादिना—

"अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ ।
अपां द्वादशगण्डूषैर्विदध्याद्द दन्तधावनम्" ॥

इति व्यासवचनाद्वा द्वादशगण्डूषैर्दन्तशोधनं कार्यमेव ।

कूर्मपुराणे—

"बहिर्ग्रामान्त्यजान्सूतिं पतितं च रजस्वलाम् ।
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे" ॥ इति ॥

विष्णुरहस्ये—

"स्मृत्यालोकनगन्धादिस्वादनं परिकीर्त्तनम् ।
अन्नस्य वर्जयेत्सर्वं ग्रासानां चाभिकाङ्क्षणम् ॥
गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलं चानुलेपनम् ।
व्रतस्थो वर्जयेत्सर्वं यच्चान्यद्बलरागकृत्" ॥

मैथुनं चात्र प्रकरणेऽष्टाङ्गमपि निषिध्यते। तथा च ब्रह्मचर्यं व्रताङ्गं विधायाह देवल—

"स्त्रीणां तु प्रेक्षणात्स्पर्शात्ताभिः संकथनादपि ।
विपद्यते ब्रह्मचर्यं न दारेष्वृतुसंगमात्" ॥ इति ॥

क्वचित्तु "स्वदारेषु तु संगमात्" इति पाठः । तत्र स्वदारेषु संगमाद्रेतोविसर्गादेव ब्रह्मचर्यं नश्यति न स्पर्शादिनेत्यर्थः । मैथुनस्याष्टाङ्गानि च—

"स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः" इत्युक्तानि ।

गुणाश्च—

"तज्जप्यजपनध्यानतत्कथाश्रवणादिकम् ।
तदर्चनं च तन्नामकीर्तनश्रवणादयः ॥

उपवासकृतामेते गुणाः प्रोक्ता मनीषिभिः ।
ब्रह्मचर्यमहिंसा च सत्यमामिषवर्जनम् ॥
व्रतेष्वेतानि चत्वारि वर्जनीयानि सूरिभिः" ॥

इत्यादिविष्णुधर्मोत्तरदेवलादिप्रतिपादिताः । आमिषं मांसम् । आमिषत्वेन स्मृत्यन्तरे परिगणितानि वा । यथा—

"आमिषं दृतिपानीयं गोवर्ज क्षीरमामिषम् ।
मसूरमामिषं सस्ये फले जम्बीरमामिषम्" ॥

अन्यत्रापि—

"आमिषं शुक्तिकाचूर्णमामिषं महिषीपयः ।
आमिषं दृतिपानीयमारनालं तथामिषम्" ॥ इत्यादीनि ॥

अथ दशम्यां वर्जनीयानि । स्कन्दपुराणे—

"कास्यं मांसं मसूरं च क्षौद्रं चानृतभाषणम् ।
पुनर्भोजनमत्याशं दशम्यां परिवर्जयेत्" ॥

कूर्मपुराणे—

"कांस्यं मांसं मसूरं च चणकान् कोरदूषकान् ।
शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम्" ॥

उपवसन्निति वर्त्तमानसामीप्ये । अनन्तरदिने उपोष्यन्नित्यर्थः ।

मत्स्यपुराणे—

"कास्यं मांसं सुरां क्षौद्रं तैलं वितथभाषणम् ।
व्यायामं च प्रवासं च दिवास्वापं च मैथुनम् ॥
तिलपिष्टं मसूरं च दशम्यादिषु वर्जयेत्" ।

दशमीं प्रकृत्य नारदीये—

"अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः।
अवनीतल्पशयनाः प्रियासङ्गविवर्जिताः" ॥

अन्यत्रापि—

"दशम्यामेकभक्तं तु कुर्वीत नियतेन्द्रियः।
आचम्य दन्तकाष्ठं तु खादेत तदनन्तरम् ॥
ततश्चानन्तरं विप्र ब्रह्मचारी जितेन्द्रियः।
रात्रीं नयेत्ततः पश्चात्प्रातः स्नात्वा समाहितः ॥
उपवासं तु संकल्प्य मन्त्रपूतं जलं पिबेत्"।

इदं च दशम्यामेकभक्तं काम्यैकादशीतव्रविषयम् ॥

"सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे।
उपवासफलप्रेप्सुर्जह्याद्भक्तचतुष्टयम् ॥
अथ नित्योपवासी चेत् सांयप्रातर्भुजिक्रियाम्।
वर्जयेन्मतिमान्विप्रः संप्राप्ते हरिवासरे" ॥

इति विष्णुरहस्यवचनात्।

"दशम्यामेकभक्तस्तु मांसमैथुनवर्जितः।
एकादशीमुपवसेत्पक्षयोरुभयोरपि ॥
देवतास्तस्य तुष्यन्ति कामितं चास्य सिध्यति"।

इतिदेवलवचनाच्च।

अत्र चैकभक्तश्रवणेऽपि विशेषणभूता द्वितीयभोजननिवृत्तिरेवा-नृतवदनादिनिवृत्तिवदङ्गतया विधीयते न तु विशेष्यभूतं भोजनमपि। लाघवात्पूर्ववचनैकवाक्यत्वाच्च।

अन्येऽपि दिनत्रयनियमा नित्यव्रते नावश्यकाः।

तथा च ब्रह्मवैवर्त्ते—

"इति विज्ञाय कुर्वीतावश्यमेकादशीव्रतम् ।
विशेषनियमाशक्तोऽहोरात्रे भुक्तिवर्जितः ॥
निगृहितेन्द्रियः श्रद्धासहायो विष्णुतत्परः ।
उपोष्यैकादशीं पापान्मुच्यते नात्र संशयः" ॥ इति ॥

कात्यायनोऽपि—

"शक्तिमांस्तु पुनः कुर्यान्नियमं सविशेषणम्" इति । दशम्यां च रात्रावुपवासमुद्दिश्य नियमा ग्रहीतव्याः ।

तदुक्तं ब्रह्मवैवर्त्ते—

"प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि ।
दशम्यामुपवासस्य प्रकुर्याद्वैष्णवं व्रतम्" ॥ इति ॥

संकल्पमन्त्रश्च "एकादश्यां निराहारः" इत्यादिरुक्तः । सङ्कल्पे च विशेषो देवलेनोक्तः—

"गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद्यथा सङ्कल्पयेद्बुधः" ॥ इति ॥

औदुम्बरं ताम्रमयं यथा सङ्कल्पयेद्यत्फलं कामयेत तत्फलकाम-इत्युल्लिखेदित्यर्थः । सङ्कल्प्य च पुष्पाञ्जलिर्देवायार्पणीयः । "इत्युच्चार्य ततो विद्वान् पुष्पाञ्जलिमथार्पयेत्" इति वराहपुराणात् । मन्त्रपूतजलपाने च विशेषः कात्यायनेनोक्तः—

"अष्टाक्षरेण मन्त्रेण त्रिर्जप्तेनाभिमन्त्रितम् ।
उपवासफलप्रेप्सुः पिबेत्पात्रगतं जलम्" ॥ इति ॥

सङ्कल्पश्चार्द्धरात्रादुपर्य्यप्यनुवर्त्तमानया दशम्या युक्तायामेकादश्यां चेदुपवासस्तदैकादश्या आद्यं यामचतुष्टयं त्यक्त्वा कर्त्तव्यः। उदयादुपर्यपि दशम्यां युक्तायां चेत्तदा रात्रौ। अर्थात्तदुत्तरं पूजादि।

तथा च नारदीये—

"दशम्या सङ्गदोषेण अर्द्धरात्रात्परेण तु।
वर्जयेच्चतुरो यामान्सङ्कल्पार्चनयोस्तदा॥
विद्धोपवासेऽनश्नंस्तु दिनं त्यक्त्वा समाहितः।
रात्रौ संपूजयेद्विष्णुं सङ्कल्पं च तदाचरेत्॥ इति॥

पूजाप्रकारश्च ब्रह्मपुराणे—

"एकादश्यामुभे पक्षे निराहारः समाहितः।
नानापुष्पैर्मुनिश्रेष्ठ विचित्रं मण्डपं शुभम्॥
कृत्वा सावरणं पश्चाज्जागरं कारयेन्निशि"।

तत्रैव—

"एकादश्यामुभे पक्षे निराहारः समाहितः।
स्नात्वा सम्यग्विधानेन सोपवासो जितेन्द्रियः॥
संपूज्य विधिवद्विष्णुं श्रद्धया सुसमाहितः।
पुष्पैर्गन्धैस्तथा धूपैर्दीपैर्नैवेद्यकैः परैः।
उपचारैर्बहुविधैर्जपहोमैः प्रदक्षिणैः॥
स्तोत्रैर्नानाविधैर्दिव्यैर्गीतवाद्यमनोहरैः।
दण्डवत्प्रणिपातैश्च जयशब्दैस्तथोत्तमैः॥
एवं संपूज्य विधिवद्रात्रौ कृत्वा प्रजागरम्।
याति विष्णोः परं स्थानं नरो नास्त्यत्र संशयः"॥ इति॥

बृहन्नारदीयेऽपि—

"देवस्य पुरतः कुर्य्याज्जागरं नियतो व्रती ।
गीतैर्वाद्यैश्च नृत्यैश्च पुराणश्रवणादिभिः" ॥

तत्रैव—

"पञ्चामृतेन संस्नाप्य एकादश्यां जनार्दनम् ।
द्वादश्यां पयसा स्नाप्य हरिसारूप्यमश्नुते" ॥ इति ॥

## अथ पारणाविवेचनम् ।

अथ द्वादशीकृत्यं तन्नियमाश्च । कात्यायनः—

"प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् ।
अज्ञानतिमिरान्धस्य व्रतेनानेन केशवः ॥
प्रसादसुमुखो नाथ ज्ञानदृष्टिप्रदो भव" इति ।
"पारणं तु ततः कुर्याद् यथासंभवमार्गतः" ॥ इति ॥

यथासंभवत्वं च ब्राह्मणभोजनतद्दक्षिणादानबन्धुसाहित्येषु ।

तथा च बृहन्नारदीये—

'ब्राह्मणान् भोजयेच्छक्त्या दद्याद्वै दक्षिणां तथा ।
ततः स्वबन्धुभिः सार्द्धं नारायणपरायणः ॥
कृतपञ्चमहायज्ञः स्वयं भुञ्जीत वाग्यतः" इति ।

शातातपोऽपि—

"उपवासं द्विजः कृत्वा ततो ब्राह्मणभोजनम् ।
कारयेत्सगुणस्तेन उपवासो हि जायते" ॥ इति ।

पारणं च नैवेद्यतुलसीयुक्तेनान्नेन कर्त्तव्यम् ।

तदुक्तं स्कन्दपुराणे—

"कृत्वा चैवोपवासं तु योऽश्नाति द्वादशीदिने ।
नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम्" ॥ इति ॥

तत्र वर्ज्यानि ब्रह्माण्डपुराणे—

"कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम् ।
व्यायामं च प्रवासं च दिवास्वप्नमथाञ्जनम् ॥
तिलपिष्टं मसूरं च द्वादशैतानि वैष्णवः ।
द्वादश्यां वर्जयन्नित्यं सर्वपापैः प्रमुच्यते" ॥

तथा—

"कांस्यं मांसं सुरां द्यूतं व्यायामं क्रोधमैथुने ।
हिंसामसत्यं लौल्यं च तैलं निर्माल्यलङ्घनम् ॥
द्वादश्यां द्वादशैतानि वैष्णवः परिवर्जयेत्" ।

बृहस्पतिरपि—

"दिवा निद्रां परान्नं च पुनर्भोजनमैथुने ।
क्षौद्रं कांस्यामिषे तैलं द्वादश्यामष्ट वर्जयेत्" ॥

कात्यायनः—"द्वादश्यां पारणं कुर्याद्वर्जयित्वा ह्युपोदकी" मित्यादि ।

इदं च सर्वनियमजातं काम्यव्रतविषयम् ।

"पुनर्भोजनमध्वा च भारमायासमैथुने ।
उपवासफलं हन्युर्दिवानिद्रा च पञ्चमी" ॥ इति ॥
"कांस्यं मांसं मसूरं च चणकं कोरदूषकाः ।
शाकं मधु परान्नं च हन्युरष्टाविमे फलम्" ॥

इत्यादिवचनेषु फलग्रहणात् । पुनर्भोजनसाहचर्याच्च । पुनर्भोजनस्य चाहत्य काम्यव्रत एव "सायमाद्यन्तयोरह्नो" रित्यादिना वर्जितत्वात् ।

इदं च पारणं यदा पारणदिने द्वादशी भोजनपर्याप्ता । तदा भोजनप्राक्कालीनं सकलं कृत्यमरुणोदये कृत्वा द्वादशीमध्य एव कर्त्तव्यम् ।

तथा च स्कन्दपुराणे—

"कलाद्वयं त्रयं वापि द्वादशी यत्र दृश्यते ।
स्नानार्चनादिकं कर्म तदा रात्रौ विधीयते" ॥ इति ॥

रात्रावित्युक्तेऽप्यरुणोदय एव कार्यम् ।

तथा च नारदीये—

"अल्पायामथ विप्रेन्द्र द्वादश्यामरुणोदये ।
स्नानार्चनक्रियाः कार्या जपहोमादिसंयुताः" ॥ इति ॥

पद्मपुराणेऽपि—

"यदा भवति अल्पा तु द्वादशी पारणादिने ।
उषः काले द्वयं कुर्यात्प्रातर्माध्याह्निकं तदा" ॥ इति ॥

एतेषु वचनेषु होमशब्देनादिशब्देन चौपासनवैश्वदेवादिकं स्मार्तमेव गृह्यते । सादृश्यात् । न तु श्रौतम् । पौराणधर्मानुरोधेन श्रौतकालबाधस्यान्याय्यत्वात् । तदनधिकृतविषयत्वेन सावकाशत्वाच्च । यस्य चावश्यकमरुणोदयाधिककालसाध्यम् । तेन तद्दिने सन्ध्यादिसङ्कोचेनाप्यावश्यकं कृत्वा द्वादशीमध्ये पारणं कर्त्तव्यम् ।

"महाहानिकरी ह्येषा द्वादशी लङ्घिता नरैः ।
करोति धर्महरणमस्नातेव सरस्वती" ॥

इति पद्मपुराणे द्वादशीलङ्घने दोषस्मरणात् । अस्नातेत्यधिकरणे क्तप्रत्ययः । तेन तस्यां स्नानमकृत्वा लङ्घिता सरस्वती यथा धर्मं हरति तथाऽभोजनेन लङ्घिता द्वादश्यपीत्यर्थः । तेन नद्यन्तरे उत्तीर्य स्नानम्, सरस्वत्यां तु स्नात्वोत्तरणमिति सूचितम् ।

यत्तु "तदादि वाभिसम्बन्धात्तदन्तमपकर्षे स्या" दिति जैमिनिसूत्रस्य क्रमवत्सु च कृत्येषु यद्यन्त्यमपकृष्यते। तदा सर्वापकर्षः स्यात्। "अन्यथा क्रमबाधना" दिति कातीयवचनस्य चोपन्यासेन भोजनापकर्षे तत्पूर्वभाविनैसर्गिकनित्यकृत्यमात्रापकर्षस्य न्यायसिद्धत्वमेव हेमाद्रिकालादर्शकारादिभिरुक्तम्। तद्वैश्वदेवादेरन्नसंस्कारत्वेन भोजनार्थत्वात्, तदभावेऽपि वा दर्शपूर्णमाससोमयागवद्वाचनिकपौर्वापर्यमात्रसद्भावात्तदपकर्षे कथंचिद्भवतु नाम।

तथा च दक्षः—

"पञ्चमे च तथा भागे संविभागो यथार्हतः।
पितृदेवमनुष्याणां कीटानां चोपदिश्यते॥
संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत्" इति।

प्रातरौपासनहोमदेवपूजादेस्तु तदभावात्तदपकर्षे तदयुक्तमेवेति वाचनिक एवायमर्थ इत्येव युक्तम्। नहि कालपौर्वापर्यकृतस्यार्थिकपौर्वापर्यस्यानुष्ठानाङ्गत्वम्। येनानपकर्षे तल्लोपनिमित्तवैगुण्यापत्त्या न्याय्योऽपकर्षः स्यात्। प्रत्युतापकर्ष एव काललोपाद्वैगुण्यम्। अत एव पशूनां सहत्वे आश्विनग्रहणोत्तरकालानुरोधेन सवनीयस्यैव प्रथममुपाकरणम्। न तु प्रकृतिदृष्टपौर्वापर्यमात्रेणाग्नीषोमीयस्य। यत्त्वग्नीषोमीयानुबन्ध्ययोरग्नीषोमीयस्य तत्र प्राथम्यं तदसति कस्यापि वैगुण्ये अणावपीत्यौचित्यमात्रात्। तस्माद्वाचनिक एवायमर्थः। अत एव च वाचनिको वचनं च प्रातर्मध्याह्नकर्तव्यस्य नित्यस्यैवापकर्षं करोति। अत एव यदा मृततिथिनिमित्तकं (१) गजच्छायावारुण्याद्यलभ्ययोगनिमित्तकं वा श्राद्धस्नानादिकं

(१) गजच्छाया वारुणी च योगविशेषौ। तत्र गजच्छाया तावच्चतुर्धा। यथा—

त्रयोदश्यां कर्तव्यं भवति सङ्क्रान्तरं वा शास्त्रीयं तदाल्पद्वादशी-मध्येऽह्निः पारणां कृत्वा पश्चाच्छ्राद्धादि विधाय भोक्तव्यम् । यदाह देवलः—

---

"योगो मघात्रयोदश्योः कुञ्जरच्छायसंज्ञकः ।
भवेन्मघायां संस्थे च शशिन्यर्के करे स्थिते" ॥

[ वीरमित्रोदया याज्ञवल्क्यस्मृतिटीका १ । २१ । ]

"यथेन्दुः पितृदैवत्ये सूर्यश्चैव करे स्थितः ।
याम्या तिथिर्भवेत्सा हि गजच्छायेति कीर्तिता" ॥

[ मिताक्षरा १ । २१ ]

"सैंहिकेयो यदा भानुं ग्रसते पर्वसन्धिषु ।
गजच्छाया तु सा प्रोक्ता श्राद्धं तत्र प्रकल्पयेत्" ॥ ( वाराहे )
' वनस्पतिगते सोमे छाया या प्राङ्मुखी भवेत् ।
गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत्" ॥

( निर्णयसिन्धुमहालयप्रकरणे ) ।

तत्र हस्तनक्षत्रस्थे सूर्ये मघासंस्थे च चन्द्रमसि आश्विनमासे त्रयोदशी सा प्रथमा गजच्छाया । हस्तावस्थानं च सूर्यस्य कन्यादशमांशोत्तरकिञ्चिदधिकसपादत्रयोदशांशं १३ , २० यावत् । हस्तस्थे सूर्ये हस्तयुता चामा सा द्वितीया गजच्छायाश्विनमासे । राहुणा सूर्ये ग्रस्ते सति ( सूर्यग्रहणे ) तृतीया गजच्छाया । वनस्पतिगते सोमे ( अर्थादमायां ) या प्राङ्मुखी गजच्छाया सा चतुर्थी ।

वारुणी च त्रिधा । शतभिषानक्षत्रयुता यदि चैत्रकृष्णत्रयोदशी सा वारुणी । शतभिषायुता चैत्रकृष्णत्रयोदशी यदि शनिवारसहिता तदा महावारुणी । शतभिषाशनिवारयुता चैत्रकृष्णत्रयोदशी यदि शुभयोगयुता तदा महामहावारुणीति । शतभिषाख्येन वरुणेन नक्षत्रेण युता वारुणी । एतौ च ग्रन्थकृतापि निर्णेष्येते ।

"सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम्।
अद्भिस्तु पारणं कुर्यात्पुनर्भुक्तं न दोषकृत्" ॥ इति ॥

अत्र चाद्भिः पारणमात्रं विधीयते। श्राद्धाद्यनपकर्षस्तु वचनाभावादेव सिद्धः। माध्याह्निकापकर्षस्तु भूयस्यामपि द्वादश्यां भवत्येव। "सर्वेषामुपवासानां प्रातरेव हि पारणेति" माधवाद्युदाहृतवचनात्। भोजनमाध्याह्निकयोश्च वाचनिकपौर्वापर्यसद्भावात्। यदा तु प्रातःकालो द्वादशीप्रथमपादव्याप्तो भवति तदा तमतिलङ्घ्यैव पारणं कर्त्तव्यम्।

"द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः।
तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः" ॥

इति विष्णुधर्मोत्तरात्।

द्वादश्यभावे त्रयोदश्यां पारणस्यार्थसिद्धस्यैव प्रशंसा नारदीये--

"त्रयोदश्यां तु शुद्धायां पारणे पृथिवीफलम्।
शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयम्" ॥ इति ॥

एतेषां च दशम्यादिनियमानामङ्गभूतानां लोपे प्रायश्चित्तं कर्त्तव्यम्। तत्र मानसनियमलोपे यमः—"मानसे नियमे लुप्ते स्मरेद्विष्णुमनामय" मिति।

वाचनिकनियमलोपे सामान्यतो योगियाज्ञवल्क्यः—

"यदि वाग्यमलोपः स्यात् स्नानदानादिकर्मसु।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम्" ॥ इति ॥

असंभाष्यपाखण्ड्यादिसम्भाषणे विष्णुधर्मोत्तरे—

"असम्भाष्यान् हि सम्भाष्य तुलस्यतसिकादलम्।
आमलक्याः फलं वापि पारणे प्राश्य शुध्यति" ॥ इति ॥

अत्रैवान्यदपि प्रायश्चित्तम्। तत्रैव—

"सम्भाष्यैतान् शुचिषदं चिन्तयेदच्युतं बुधः।
इदं चोदाहरेत्सम्यक् कृत्वा तत्प्रवणं मनः ॥
शारीरमन्तःकरणोपघातं वाचश्च विष्णुर्भगवानशेषम्।
शमं नयत्वस्तु ममेह शर्म पापादनन्ते हृदि सन्निविष्टे ॥
अन्तःशुद्धिं बहिःशुद्धिं शुद्धो धर्ममयोऽच्युतः।
स करोतु ममैतस्मिञ्छुचिरेवास्मि सर्वदा ॥
बाह्योपघातानन्घान्बौद्धांश्च भगवानजः।
शमं नयत्वनन्तात्मा विष्णुश्चेतसि संस्थितः ॥
एतत्संभाष्य जप्तव्यं पाखण्डिभिरुपोषितै" रिति।

एतस्य च जपस्य मन्त्रलिङ्गात्सर्वोपघातविषयत्वप्रतीतावपि सम्भाषणविषयतैव। "एतत्सम्भाष्य जप्तव्य" मिति प्रत्यक्षवचनात्। पाखण्ड्याद्यवलोकने विष्णुपुराणे "तस्यावलोकनात्सूर्यं पश्येत मतिमान्नरः" इति। तत्रैव विशेषो विष्णुधर्मोत्तरे "नमः शुचिषदे-त्युक्त्वा सूर्यं पश्येत दीक्षितः" इति। दीक्षितः स्वीकृतनियमः। तत्स्पर्शेऽपि तत्रैव। "संस्पर्शे तु बुधः स्नात्वा शुचिरादित्यदर्शना" दिति।

दन्तधावने प्रायश्चित्तं विष्णुरहस्ये—

"श्राद्धोपवासदिवसे खादित्वा दन्तधावनम्।
गायत्र्याः शतसम्पूतमम्बु प्राश्य विशुध्यति" इति ॥

चाण्डालादिशब्दश्रवणे बृहन्नारदीये—

"रजस्वलां च चाण्डालं महापातकिनं तथा।
सूतिकां पतितं चैव उच्छिष्टं रजकादिकम्" ॥

इत्युपक्रम्य—

"व्रतादिमध्ये शृणुयाद्ध्योषां ध्वनिमुत्तमः ।
अष्टौतस्सहस्रं तु जपेद्वै वेदमातरम्" ॥

वेदमातरं गायत्रीम् ।

अनृतभाषणादौ कात्यायनः—

"मिथ्यावादे दिवास्वापे बहुशोऽम्बुनिषेवणे ।
अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः" ॥ इति ॥

अष्टाक्षरम् " ॐ नमो नारायणाय" इति ।

हिंसास्तेययोः शङ्खः—

"कृत्वा स्तेयं प्राणिहिंसां यथार्हं शास्त्रचोदितम् ।
प्रायश्चित्तं व्रती कुर्याज्जपेन्नामशतत्रयम्" ॥ इति ॥

नाम्नां शतत्रयम् । न त्वेकं नाम शतत्रयवारमिति । संख्यायाः पृथक्त्वनिवेशितत्वात् ।

ताम्बूलचर्वणादौ पैठीनसिः—

"ताम्बूलचर्वणे स्त्रीणां भोगे मांसनिषेवणे ।
व्रतलोपो भवेत्कुर्यादष्टाक्षरमनोर्जपम्" ॥ इति ॥

मांसस्य भक्ष्यस्य निषेवणे । अभक्ष्यमांसभक्षणे तु स्तेयादिवत्स्मार्त्तप्रायश्चित्तेन समुच्चयः । एवं मैथुनेऽपि स्वदारविषये । परदारविषये पूर्ववत्समुच्चयः । स्वदारमैथुनेष्यृतुकालादन्यत्र ।

तथा च कात्यायनः—

"रेतःसंक्रमणाद्दोषाद्दोषोऽन्यत्र क्षयः स्मृतः ।
जपोऽष्टाक्षरमन्त्रस्य नामशतत्रयस्य वा" ॥ इति ॥

रेतसः संक्रमणं गर्भकोशे तद्योग्यं गमनम्। ऋतुकालगमनमिति यावत्। तदात्मकात्स्त्रीसंभोगादन्यत्र संभोगे व्रतस्य क्षय इत्यर्थः। देवलेनाप्युक्तं "न दारेष्वृतुसंगमा" दिति। तेन तत्रैव मन्त्रजपः। जपसंख्या पूर्वोक्ता शतत्रयरूपा। ऋतुगमनाभ्यनुज्ञापि प्रागसंनिहितस्य षोडश्यामेव व्रतरात्रौ संनिहितस्य। अनन्यगतिकत्वात्। एवं "ब्रह्मचार्ये" वेति श्राद्धादिविषयात्सामप्यनुज्ञायाम्। अस्पृश्यस्पर्शादौ स्मृत्युक्तं स्नानादि। अपरस्यापि यस्य क्वापि कस्य नियमस्य लोपे प्रायश्चित्तविशेषो नोक्तः। तत्र सर्वत्र मन्त्रस्य नाम्नां वा जपो द्रष्टव्य इति।

## अथैकादशीव्रतविवेचनम्।

अथ व्रते एकादशी निर्णीयते। सा च द्विविधा संपूर्णा विद्धा च। तस्याश्च संपूर्णत्वं नोदयमात्रादारभ्य प्रवृत्तायाः, किं तूदयात्प्रागपि मुहूर्त्तद्वयव्यापिन्याः। तथा च—

"प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः।
संपूर्णा इति विख्याता हरिवासरवर्जिता"॥

इति स्कन्दपुराणवचने इतरतिथिविषयं सूर्योदयादारभ्य प्रवृत्त्या संपूर्णत्वं हरिवासरे एकादश्यां पर्युदस्तम्। कीदृशं तर्हि तत्र संपूर्णत्वमित्यपेक्षायां च—

"आदित्योदयवेलायाः प्राङ्मुहूर्त्तद्वयान्विता।
एकादशी तु संपूर्णा विद्धान्या परिकीर्तिता"॥

इति भविष्यत्पुराणवचनेनेतरतिथिविलक्षणं तदुक्तम्। अत्र च सूर्योदयादारभ्य प्रवृत्तत्वं सूर्योदयपर्यन्तं सत्त्वं च द्वयं मिलितं सामान्यतः संपूर्णत्वप्रयोजकं यदुक्तं तन्मध्ये पूर्वमेवैकादश्यां

पर्युदस्यते "हरिवासरवर्जिता" इत्यनेन। न तूत्तरमपि। तत्रैव वचनान्तरे विशेषविधानात्। तेनारुणोदयादारभ्य द्वात्रिंशन्मुहूर्त्तव्यापिनी एकादशी संपूर्णा न त्वितरतिथिवत्षष्टि-घटिकामात्रव्यापिनी।

यत्तु "आदित्योदयवेलाया आरभ्य षष्टिनाडिकाः। संपूर्णैकादशी नामे" तीतरतिथितुल्यं संपूर्णत्वमेकादश्या अप्युक्तम्। तन्न मुख्यम्। किन्त्वनुकल्पः। तस्य च विषयो वक्ष्यते। अरुणोदयैकदेशस्य च दशम्या पूरणादेकादश्या सकलतदव्याप्त्या विद्धत्वम्। तेन यैकादशी कृत्स्नारुणोदयव्यापिनी द्वितीयसूर्योदयादर्वागेव रात्रौ दिने वा समाप्ता द्वादश्या युक्ता सा न विद्धा न संपूर्णा किंतु खण्डामात्रम्, सूर्योदयमारभ्य तदस्तमयमात्रपर्यन्तं वर्त्तमाना इतरतिथय इव।

गरुडपुराणशिवरहस्यसौरधर्मेष्वपि—

"उदयात्प्राग्यदा विप्र मुहूर्त्तद्वयसंयुता।
संपूर्णैकादशी नाम तत्रैवापवसेद्गृही" ॥ इति ॥

तेन—

"अरुणोदयकाले तु दशमी यदि दृश्यते"।
"अरुणोदयकाले तु दिशागन्धो भवेद्यदि" ॥

इत्यादिवचनेषु योऽरुणोदय उक्तः। स उदयप्राचीनमुहूर्त्त-द्वयात्मक एव द्रष्टव्यः। पूर्वैकवाक्यत्वात्। योगार्थस्यापि तत्रैव संभवाच्च। यच्च क्वचिद्रात्र्यन्त्याष्टमभागस्यारुणोदयत्वाभिधानम्। तदल्पान्तरत्वादेतत्परमेव।

यत्तु ब्रह्मवैवर्त्ते "चतस्रो घटिकाः प्रातररुणोदयनिश्चये" इत्युक्त्वा घटिकाविभागेनैव वेधातिवेधमहावेधयोगाख्याश्चत्वारो वेधा दोषतारतम्यार्थं केवलं दर्शिताः—

"अरुणोदयवेधः स्यात्सार्धं तु घटिकात्रयम्।
अतिवेधो द्विघटिकः प्रभासंदर्शनाद्रवेः ॥

महावेधस्तु तत्रैव दृश्यतेऽर्को न दृश्यते।
तुरीयस्तत्र विहितो योगः सूर्योदये सति" ॥ इति ॥

तत्र "मुहूर्त्तो घटिकाद्वयम्" इतिवद्घटिकाशब्दो मुहूर्त्तार्द्धपरः। "उदयात्प्राक् चतस्रस्तु नाडिका अरुणोदये" इति नारदादिवचने नाडिकाशब्दोऽपि तथा।

अत एव—

"नागो द्वादशनाडीभिर्दिक् पञ्चदशभिस्तथा।
भूतोऽष्टादशनाडीभिर्दूषयन्त्युत्तरां तिथिम्" ॥

इति वचनोक्तो विशेषवेधः षट्सार्द्धसप्तनवमुहूर्त्तपर्यवसन्न एव कालादर्शादिषु दर्शितः। तेन रात्रिह्रासवृद्धिभ्यां मुहूर्त्तानामपि ह्रासवृद्धी सम्यगालोच्य वेधनिश्चयः कर्त्तव्यो न तु स्थूलदृशेति। अयं चारुणोदयवेधो—

"दशमीवेधसंयुक्तो यदि स्यादरुणोदयः।
नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम्" ॥

इति गारुडवचनात्,

"परामापदमापन्नो हर्षे वा समुपस्थिते।
नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी" ॥

इति स्कन्दपुराणलक्षितविष्णुमन्त्रदीक्षायुक्तरूपवैष्णवविषयः

"सूर्योदयस्पृशा ह्येषा दशम्या गर्हिता सदा" इति ॥
"अतिवेधादयः सर्वे ये वेधास्तिथिषु स्मृताः।
सर्वेऽप्यवेधा विज्ञेया वेधः सूर्योदये स्मृतः" ॥

इत्यादिवचनोक्तः सूर्योदयवेध एव तु परिशेषादितरेषामित्येव यद्यपि माधवाचार्यादिभिः सर्वैर्दाक्षिणात्यनिबन्धकारैरुच्यते, तथाप्यरुणोदयव्यापिन्याः संपूर्णत्वं तदव्यापिन्याश्च विद्धात्वं प्रतिपादयतो वचनस्य सामान्यविषयत्वात्, "नैवोपोष्य" मिति वचने चैवकारप्रयोगेण वैष्णवेन सर्वथा नित्यत्वेन काम्यत्वेन वा परदिन एकादशीद्वादश्योरलाभेऽपि वाऽरुणोदयवेधवत्यां "नोपोष्य" मित्युक्त्वा सति संभवे वैष्णवेतरैरपि "नोपोष्यमिति" प्रतीतेः, सति संभवे तद्विषयत्वमप्यरुणोदयवेधस्यानन्तभट्टीयगौड़निबन्धोक्तं युक्तम्। अत एव केषुचिदरुणोदयविद्धानिषेधवचनेषु काम्योपवासविषयता स्पष्टं प्रतीयते।

तथा च गारुड़पुराणे—

"उदयात्प्राक् त्रिघटिकाव्यापिन्येकादशी यदा।
संदिग्धैकादशी नाम त्याज्या वै धर्मकाङ्क्षिभिः॥
पुत्रराज्यसमृद्ध्यर्थं द्वादश्यामुपवासयेत्।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम्॥
उदयात्प्राङ्मुहूर्त्तं न व्यापिन्येकादशी यदा।
संयुक्तैकादशी नाम वर्जयेद्धर्मवृद्धये॥
पुत्रपौत्रसमृद्ध्यर्थं द्वादश्यामुपवासयेत्।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम्"॥ इति॥

अत्र हि य उपवासो राज्यपुत्रादिलाभार्थं द्वादश्यां विधास्यते स काम्य एव विद्धायां निषिध्यत इति प्रतीयते समभिव्याहारात्। न च वैष्णवान् प्रति स एव निषेद्धुं शक्यते। नित्यस्यापि तान्प्रति निषेधात्। तेन तदितरविषयत्वमेवैतेषां वचनानाम्। न चैतत्फलश्रवणमर्थवादमात्रम्। परार्थत्वादेस्तन्यायस्याभावात्। तत्र "क्रतुशतम्" इति तु प्रयाजादिफलश्रुतिवदर्थवादः। पारणस्याङ्गत्वात्। इदं च

द्वादश्यां काम्यैकादश्युपवासविधानं प्रक्रान्तसंवत्सरादिव्यापिकाम्यप्रयोगविषयम् । न तूपक्रमविषयम् । तस्येतरतिथिकाम्यव्रतवत्संपूर्णायामेव युक्तत्वात् । एवंजातीयस्य च विधेः प्रक्रान्तविषयत्वेनाप्युपपत्तेः । नित्यस्तु द्वादश्याम् । स बहुषु विषयेषु विधीयते । अत एव चैकादशीनिमित्तक एवोपवासव्रते द्वादशीव्रतशब्दोऽपि बहुषु वचनेषु प्रयुज्यते ।

यदपि—

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।

उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही" ॥

इत्युत्तरदिने एकादशीमात्रस्य सत्त्वे केषांचिदुत्तरस्यामुपवासविधानम् ।

यच्च—

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।

सर्वैरुत्तरतः कार्या परतो द्वादशी यदि" ॥

इत्युभयोः परदिने सत्त्वे सर्वेषां परत्रोपवासविधानम् । तदपि वैष्णवेतरविषयमेव युक्तम् । वैष्णवानां विद्धत्वमात्रेणैव परत्रान्यतरस्या अलाभेऽप्युत्तरत्रोपवाससत्त्वात् । संपूर्णा चात्र न सूर्योदयमुहूर्त्तद्वयमात्रव्यापिनी । किं तु "उदयात्प्राग्" इति परिभाषितैव ।

"पुनः प्रभातसमये घटिकैका यदा भवेत् ।

तत्रोपवासो विहितश्चतुर्थाश्रमवासिनाम् ॥

विधवापि च तत्रैव परतो द्वादशी न चेत्" ।

इति गारुडवचने परमुदयद्वयमात्रव्यापिन्येव ग्राह्या । न त्वितः पूर्वमेवोदयात्प्रागिति वचनोक्ता अरुणोदयादारभ्य प्रवृत्ता ।

नाडीपञ्चकात्मकतिथिवृद्धिं विना तादृश्या उत्तरदिने एकघटिका-सत्त्वासम्भवात्। तावत्तिथिवृद्ध्यनन्तरं चाकस्मिकस्य ह्रासस्य ज्योतिश्शास्त्रेऽप्रसिद्धेः। प्रभातशब्दश्चायमुषः पर्यायो द्वितीयदिन-प्रातःपर एव। "संपूर्णैकादशी यत्र परतः पुनरेव सा" इत्यादिवचना-न्तरैकवाक्यत्वात्। तेन वैष्णवेतरेषामपि यावत्सम्भवमरुणोदयविद्धा निषिद्धैव। यथा तु वैष्णवान्प्रत्यरुणोदयविद्धत्वमात्रेण त्याज्यत्वम्। नैवं सूर्योदयवेधाभावे तदितरान्प्रति। तान्प्रत्यपि तथात्वे—

"सूर्योदयस्पृशा ह्येषा दशम्या गर्हिता सदा।
सर्वेऽप्यवेधा विज्ञेया वेधः सूर्योदये स्मृतः"॥

"आदित्योदयवेलायाः" इत्यादिवचनानां निर्विषयत्वापत्ति-रित्येतावन्मात्रेण वेधद्वयस्य वैष्णवतदितरविषयत्वेन व्यवस्था-व्यवहारो निबन्धेषु।

ननु यथा परदिने उभयोरन्यतरस्या वा अलाभे वैष्णवभिन्ना-नामरुणोदयविद्धाया अपि ग्राह्यत्वम्, एवं सूर्योदयविद्धाया अपीति को विशेषस्तान्प्रति सूर्योदयवेधस्यारुणोदयवेधस्येव वैष्णवान्प्रति।

उच्यते। नैव सा अविद्धा किन्तु विद्धापि ग्राह्या। "विद्धाप्यविद्धा विज्ञेया" इत्यादिवचनेभ्यः। अरुणोदयविद्धा तु तान्प्रति तादृशे विषये विद्धैव न भवति। "सर्वेऽप्यवेधा विज्ञेयाः" इतिवचनात्। "आदित्योदयवेलाया" इत्यस्य चैतादृश एव विषये सम्पूर्णत्वप्रति-पादकत्वात्। "विद्धापि" इत्येतच्च सूर्योदयवेधपरमेव—

"यदि दैवात्तु संसिध्येदेकादश्यां तिथित्रयम्।
तत्र क्रतुशतं पुण्यं द्वादश्यां पारणे भवेत्॥
त्रिस्पृगेकादशी यत्र तत्र सन्निहितो हरिः।
तामेवोपवसेत्काममकामो विष्णुतत्परः"॥

इत्यादिवचनैकवाक्यत्वात्। सूर्योदयोत्तरमेव द्वितीयसूर्योदया-द्वार्ग्दिनक्षये त्रिस्पृशादिव्यवहारात्।

गौडनिबन्धेषु सूर्योदयविद्धायाः प्रवेशिन्याख्यायाः सर्वान्प्रत्यपि सर्वदाऽग्राह्यत्वमेवोक्तम्। "कुर्यादलाभे संयुक्तां नालाभेऽपि प्रवेशिनी" मिति। संयुक्ताऽरुणोदयविद्धा। एतच्चोपरिष्टात्प्रपञ्च-यिष्यामः।

तदेवमरुणोदयमारभ्य द्वितीयसूर्योदयं यावद्वर्त्तमाना सर्वान्प्रति शुद्धा, सूर्योदयोत्तरं कियत्यापि दशम्या युक्ता च सर्वान्प्रति विद्धा, ततः प्राचीनमुहूर्त्तद्वयमध्ये दशम्यन्विता च वैष्णवान्प्रति सर्वदा, इतरांस्तु प्रति काम्यव्रते परतोऽन्यतरसत्त्वे च विद्धेति, शुद्धाविद्धा-विवेके स्थिते निर्णयः क्रियते।

## अथ वैष्णवैकादशीविवेचनम्।

वैष्णवैर्विद्धा सर्वथा त्याज्या। "दशमीशेषे" ति गरुडपुराणवचनात्। शुद्धाप्यन्यतरस्या अपि परत्र सत्त्वे त्याज्या। तत्रैकादश्यास्तावत्तथात्वे त्याज्यत्वं नारदेनोक्तम्—

"संपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी।
द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां च पारणम्" ॥ इति ॥

संपूर्णात्रोदयात्प्रागिति परिभाषिता।

द्वादश्यास्तथात्वे व्यासेन—

"एकादशी यदा लुप्ता परतो द्वादशी भवेत्।
उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम्" ॥ इति ॥

उभयोस्तथात्वे भृगुनारदाभ्याम्—

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि" ॥ इति ॥

वैष्णवश्च योगपरिभाषाभ्यां वैष्णवागमोक्तविष्णुमन्त्रदीक्षावान् । अत्र च विद्धानिषेधस्य प्रकरणेन व्रताङ्गत्वात्तदतिक्रमे व्रतस्य वैगुण्यान्नित्यकाम्यतत्प्रयोगफलस्य पापक्षयस्य स्वर्गविष्णुप्रीत्यादेर्वाऽसिद्धिरस्त्येव पुरुषस्यापि तु प्रत्यवायः ।

"अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजः ।
श्रद्धाविहीनः कर्त्तारं नास्ति यज्ञसमो रिपुः" ॥

इति वचनबलाद्यज्ञाङ्गमन्त्रब्राह्मणभोजनादिभ्रेष इव । तथा ह्यत्र—

"दशमीशेषसंयुक्ता गान्धार्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥
दशम्यनुमता यत्र तिथिरेकादशी भवेत् ।
तत्रापत्यविनाशः स्यात्परेत्य नरकं व्रजेत्" ॥

इत्यादिषु बहुषु वाक्येषु पुरुषगतमनिष्टं स्मर्यते ।

अत एव च—

"दशमीशेषसंयुक्तां न तु कुर्यात्कथंचन ।
जम्भस्येयं पुरा दत्ता दशमीशेषसंयुता ॥
उपोष्य तां प्रमादेन प्रायश्चित्तं चरेद्द्विजः" ।

इत्युक्त्वा—

"अज्ञानाद्यदि वा मोहात्कुर्वन्नेकादशीं नरः ।
दशमीशेषसंयुक्तां प्रायश्चित्तमिदं चरेत् ॥

कृच्छ्रपादं नरश्चीर्त्वा गां च दद्यात्सवत्सिकाम् ।
सुवर्णस्यार्द्धकं देयं तिलद्रोणसमन्वितम्" ॥

इति प्रायश्चित्तं विधाय तदकरणेऽप्रतिसमाहितनिषेधातिक्रमनिमित्तो द्विविधोऽपि दोषो दर्शितो हेमाद्र्युदाहृतपुराणवचने ।

"प्रायश्चित्तमकुर्वाणस्तत्फलेन विनाशितः ।
स गच्छत्यन्धतामिस्रं नरकं भृशदारुणम्" ॥ इति ॥

वचनान्तरमप्येतदर्थकमेवोदाहृतं तेनैव—

"प्रायश्चित्तं प्रकर्त्तव्यं शुद्ध्यर्थं तु व्रतस्य वै ।
निश्छिद्रं जायते येन धर्मः सन्तानमेव च ॥
ब्राह्मणान् भोजयेत्त्रिंशद्गां च दद्यात्सवत्सिकाम् ।
धरणस्यार्द्धकं दद्यात्तिलद्रोणमथापि वा" ॥ इति ॥

एतद्वचनैकवाक्यत्वाच्च पूर्ववचनं यद्यपि पूर्वोक्तवेधचतुष्टयमध्ये—सूर्य

"यातुधानव्रतं योगे महावेधे तु बाष्कलेः ।
जम्भासुरस्यातिवेधे मोहिनी वेधलेशिनी' ॥

इति जम्भासुरभागत्वेन निन्दितो योऽतिवेधस्तदतिक्रमविषयमेव प्रतीयते। तथापि तस्य निन्दामात्रत्वात्सकलवेधपरमेव तदपि। केवलं सूर्योदयतत्प्रत्यासन्नतद्व्यवहितव्यवहिततरादिवेधातिक्रमे पुरुषगतप्रत्यवायतारतम्यस्यावश्यं वक्तव्यत्वात्। अन्यथा निर्णयानुपयोगित्वाद्वेधविभागप्रतिपादनस्य वैयर्थ्यापत्तेः। प्रायश्चित्ते तारतम्यं व्यवस्था वोच्चावचानां कल्पनीया ।

एतेनैतदपि निरस्तं यदर्थवादे पुरुषगतानिष्टश्रवणान्निषेध्यफलस्य चैवं कामशब्दानपेक्षत्वाद्विद्धानिषेधस्य निवर्त्तकतया

तदर्थत्वम्। तर्हि तेनैव नैराकाङ्क्ष्यात्प्रकरणबाधेनावगोरणनिषेधवत्कर्माङ्गत्वं न स्यादेवेति। प्रायश्चित्ताकरणे कर्मफलविनाशस्य तत्करणे च व्रतनिश्छिद्रत्वस्याप्यर्थवादे श्रवणात्तद्वशादेव व्रताङ्गत्वस्यापि प्रतीतेः।

यत्तु हेमाद्रिणा घटिकासार्द्धत्रयत्रयद्वयवेधवाक्यानां रात्रिह्रासवृद्धिवशेन—

"निशि प्रान्ते तु यामार्द्धे देवकादित्रवर्दिते।
सारस्वतानध्ययने वारुणोदय उच्यते"॥

इति वचनोक्तस्यारुणोदयस्य रात्र्यन्त्याष्टमभागरूपस्य कालभेदेन घटिकाचतुष्टयादिरूपत्वसम्भवात्तद्वेधोपलक्षकत्वेनैकार्थत्वमेवोक्तम्।

"तदरुणोदयवेधः स्यात्सार्द्धं तु घटिकात्रयम्।
अतिवेधो द्विघटिकः प्रभासंदर्शनाद्रवेः॥
महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते।
तुरीयस्तत्र विहितो योगः सूर्योदये बुधैः"॥

इतिवेधनां भेदस्य स्पष्टं प्रतीतेरर्द्धयामवाक्यस्यैव त्वल्पान्तरत्वेन मुहूर्त्तद्वयोपलक्षणत्वौचित्यादयुक्तम्।

तेन मुहूर्त्तार्द्धात्मकघटिकाचतुष्टयरूपारुणोदयान्तःकिञ्चिदपि दशमीप्रवेशेऽरुणोदयवेधत्वे सत्येव दोषतारतम्यसूचनार्थं वेधातिवेधादिविभागप्रतिपादनम्। तत्र "सार्द्धम्" इत्युपलक्षणम्। अरुणोदयाद्यघटिकासम्बन्धमात्रं तु दशम्या विवक्षितम्। तत्तदर्द्धव्याप्त्या सम्पूर्णतद्व्याप्त्या वा भवतु। अत एव तादृशवेधवत्यास्तेनैव क्रमेण संपृक्तसंदिग्धरूपेण द्वैविध्यकथनपूर्वकं वर्ज्यत्वमुक्तं गरुडपुराणे—

"अरुणोदयवेलायां दशमी यदि सङ्गता ।
संपृक्तैकादशीं तां तु मोहिन्यै दत्तवान्विभुः ॥
उदयात्प्राक् त्रिघटिकाव्यापिन्येकादशी यदा ।
सन्दिग्धैकादशी नाम वर्ज्येयं धर्मकाङ्क्षिभिः ॥ इति ॥

अतिवेधवती संयुक्तेत्युक्ता तत्रैव—

उदयात्प्राङ्मुहूर्त्तेन व्यापिन्येकादशी यदा ।
संयुक्तैकादशी नाम वर्जयेद्धर्मवृद्धये" ॥ इति ॥

सूर्योदयप्रत्यासन्नवेलायां दशमीयोगो महावेधस्तद्वती सङ्कीर्णेत्युक्ता तत्रैव—

"आदित्योदयवेलाया आरभ्य षष्टिनाडिकाः ।
सङ्कीर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः" ॥ इति ॥

उदयवेलाव्यवहितपूर्वक्षणपर्यन्तं दशमीयुक्तेत्यर्थः । सूर्योदयोत्तरं किञ्चिद्विद्यमानदशमीयोगो योगः स एव सूर्योदयवेधः प्रसिद्धः । तथा चाननुज्ञातविद्धानिषेधातिक्रमविषयत्वात्पूर्वोक्तप्रायश्चित्तस्य वैष्णवानां सर्वप्रकारवेधे तद्भवति । तेषां सर्वथा विद्धानिषेधात् । अरुणोदयवेधस्य तन्मात्रविषयत्वपक्षे च तेषामेव सूर्योदयाव्यवहितव्यवहिततरव्यवहिततमवेधभेदेन तारतम्यापन्नं तत् । अन्येषां तु सूर्योदयवेध एव । सति सम्भवे सर्वविषयत्वेऽप्यरुणोदयवेधस्य सर्वान्प्रति तादृशमिति ।

वस्तुतस्तु यथा श्राद्धादिदिनमैथुनादिनिषेधातिक्रमस्य पुरुषगतानिष्टकीर्तनेनापि निन्दा न हि, निन्दान्यायेन तन्निषेधस्तुत्यर्थैव (१)।

---

(१)—'यत्पशून्दद्यात्' "सोऽनृतं कुर्यात्" इत्यत्र यथा पशुनिन्दा न निषेधाय कल्पते । किन्तु "औदुम्बरः सोमचमसो दक्षिणा" "स प्रियाय सगोत्राय ब्रह्मणे देयः" इति ऋतपेयश्रुतविधित्सितसोमचमसस्तुत्यर्था । यथाह माधवो जैमिनीयन्यायमालायाम्—( १० । ३ । १६ । ३० )

"निन्देयं न निषेधाय चमसस्तुतये त्वसौ" ॥ इति ॥

तद्वदत्रापि श्राद्धदिनमैथुनादिनिन्दा निषेधस्तुत्यर्थैव ।

निषेधाश्च कर्माङ्गमेव। तदतिक्रमप्रायश्चित्तमप्यप्रकरणाधीतमपि (२) अश्वप्रतिग्रहेष्टिन्यायेन निमित्तभूतातिक्रम्स्यमाणनिषेधोपस्थापिततच्छेषिभूतकर्माङ्गमेव। एवं विद्धानिषेधातिक्रमनिन्दाया अपि तन्निषेधस्तुतिमात्रार्थत्वात्तन्निषेधो व्रताङ्गमेव। तदतिक्रमे व्रतस्यैव वैगुण्यम्। प्रायश्चित्तमपि तत्समाधानार्थमेव। निषेधातिक्रमे प्रायश्चित्ताकरणे च पुरुषगतानिष्टकीर्त्तनमप्यर्थवादमात्रम्। "वि वा एष इन्द्रियेण वीर्येण ऋध्यते" इतिवद्धोपलक्षितप्रधानफलविपर्ययाभिप्रायमेव। प्रायश्चित्तकरणे फलश्रवणमप्यङ्गे फलश्रुतित्वादुपलक्षितप्रधानफलेन तत्स्तुत्यर्थमेव। प्रयाजादिफलश्रवणात्। वैगुण्यरूपस्य कर्मदोषस्यापि च वेधातिवेधादिसमाख्यया "सूर्योदस्पृशा ह्येषा दशम्या गर्हिता सदेति" सूर्योदयवेधस्यात्यन्तगर्हितत्वप्रतीतेः, तत्प्रत्यासत्तितारतम्येन च तन्निषेधतारतम्यप्रतीतेः, तदतिक्रमनिमित्तस्य तारतम्यं युक्तमेवेति प्रायश्चित्तानामपि तत्समाधानार्थानां श्रुतानामेवोच्चावचानां व्यवस्थामात्रस्य तारतम्यापन्नतत्स्वरूपस्यैव वा कल्पनं युक्तमेवेति।

इति वैष्णवान्प्रत्येकादशी निर्णीता।

---

(२)—वेदे "वडवा दक्षिणा" इत्युच्यते। सति चाश्वग्रहणे जलोदरव्याधिर्जायते। "योऽश्वं प्रतिगृह्णाति" इत्युक्तत्वात्। जलोदरव्याधिनिवृत्तये च 'यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इत्येन विहिताश्वप्रतिग्रहेष्टिर्दात्रानुष्ठीयते। सेयं वैदिकाश्वप्रतिग्रहणजनितव्याधिनिवृत्तये विहिताश्वप्रतिग्रहेष्टिर्वडवादक्षिणाकस्य शेषिभूतकर्मणोऽङ्गमित्यश्वप्रतिग्रहेष्टिन्यायो जैमिनीयन्यायमालायां परिस्फुटः। (३ अ० ४ पा० १४-१५ अधि०)।

# अथ स्मार्तैकादशीविवेचनम् ।

अथ तदितरान् स्मार्तत्वेन प्रसिद्धान्प्रति निर्णीयते । तत्र—

"शुद्धा यदा समा हीना समक्षीणाधिकोत्तरा ।
एकादशीमुपवसेन्न शुद्धां वैष्णवीमपि" ॥

इति माधवाद्युदाहृतनिर्णायकस्कान्दवचनदर्शनात्, तथा दाक्षिणात्यबहुनिबन्धृसंमतात्, वर्धमानादिभिश्च कल्पतरुकाराद्धृतत्वेन विश्वरूपाचार्यलिखितत्वेन चोदाहृतात्,

"शुद्धा विद्धा तथा त्रेधा भिन्ना न्यूनसमाधिकैः ।
त्रेधैकैका पुनर्भिन्ना द्वादशन्यूनसमाधिकैः" ॥

इति वचनाच्चैकादश्या अष्टादशभेदास्तावत्कैश्चित् कृताः । "अधिकै" रित्युभयत्रापि भावप्रधानो निर्देशः । तस्याश्च न्यूनसमयोरप्यन्वयः ।

तेन द्वादशीहानियुक्ता शुद्धन्यूना, द्वादशीसाम्ययुक्ता शुद्धन्यूना, द्वादश्याधिक्ययुक्ता शुद्धन्यूना, द्वादशीहानियुक्ता शुद्धसमा, द्वादशीसाम्ययुक्ता शुद्धसमा, द्वादश्याधिक्ययुक्ता शुद्धसमा, द्वादशीहानियुक्ता शुद्धाधिका, द्वादशीसाम्ययुक्ता शुद्धाधिका, द्वादश्याधिक्ययुक्ता शुद्धाधिकेति शुद्धा नवविधा । एवं विद्धापीति ।

अत्र च समत्वं न्यूनत्वमाधिक्यं च द्वितीयसूर्योदयापेक्षया । वेधश्चान्वयव्यतिरेकाभ्यां विद्धाशुद्धोपलक्षको यः स सूर्योदयोत्तरकालीन एव न त्वरुणोदयगतोऽपि । तत्र गृह्यमाणे केषांचिद्भेदानामसम्भवात् । तादृशवेधरहितायां शुद्धायामधिकायां घटिकापञ्चकवृद्धायां द्वादशीहानेरसम्भवात् । एतावद्वृद्ध्यनन्तरमेतावद्धानेर्ज्योतिःशास्त्रमर्यादायामप्रसिद्धेः । एवं विद्धाभेदानामपि केषांचिदरुणोदयवेधेऽसङ्गतिर्ज्योतिःशास्त्रमर्यादया ज्ञेया ।

अत एव गरुडपुराणे—

"उदयात्प्राग्यदा विप्रा मुहूर्त्तद्वयसंयुते" त्युपक्रम्याप्युक्तम्। "पुनः प्रभातसमये घटिकैका यदा भवेत्। परतो द्वादशी न चे" दिति च सूर्योदयवेधपरमेव। पूर्वं त्वरुणोदयवेधाभिधानं त्याज्यत्वमात्रपरं न तु प्रकृतोपयुक्तमित्युक्तमनन्तभट्टहेमद्र्यादिभिः।

यद्यपि च ज्यौतिषमर्यादया सूर्योदयसमापि तिथिर्नायाति। किन्तु किंचिन्न्यूनैवाधिकैव वा। तथाप्यल्पान्तरत्वात्पलद्वयत्रयादिन्यूनैव समा द्रष्टव्या। साम्यावलम्बनेन जन्माष्टमीभेदानामेकादशीभेदानां च बहुभिः प्रामाणिकैरभिधानात्। एमष्टादशभेदानुक्त्वा तत्र निर्णयो वर्धमानोपाध्यायादिभिस्तावद्भिश्वरूपाचार्यलिखितत्वेनैवोदाहृतैरन्यैश्च महाजनपरिगृहीतैर्वचनैः संवाद्यैवमुक्तः।

'आद्यासु षट्सु पूर्वैव व्यवस्थानन्तरद्वये।
गृहमेधियतीनां स्यान्नवम्यां स्यात्परेऽहनि॥
विद्धात्रये तु पूर्वा स्याद्व्यवस्थानन्तरद्वये।
अपरेऽहनि शेषाः स्युः सप्तमी तु व्यवस्थया" ॥ इति ॥
"शुद्धाधिका न्यूनसमोत्तरा चेत्पूर्वा गृहस्थैर्यतिभिः परैव।
सा चेत्पराधिक्यवती परैव शेषास्तु शुद्धाः प्रथमा उपोष्याः॥
विद्धासमा न्यूनसमोत्तरा चेद्विद्धाधिका न्यूनपरा च तत्र।
सैव व्यवस्था यदि विद्धहीना ग्राह्योपवासे प्रथमैव सर्वैः॥
विद्धा समा यद्यधिकोत्तरा स्याद्विद्धाधिका वृद्धसमोत्तरा स्यात्।
तदा परैव प्रतिमुक्तशङ्कैरेकादशी सर्वजनैरुपोष्याः" ॥ इति॥

दाक्षिणात्यनिबन्धेष्वप्यनन्तभट्टीयहेमाद्रीयादिष्वष्टादशभेदानभिप्रेत्य मदनरत्नादिषु प्रामाणिककृतेषु हेमाद्रीयाद्यर्थसंग्रहग्रन्थेषु च तानुद्भाव्यैव क्वचित्क्वचित्पूर्वविसंवादी निर्णयः कृतः। इदं चाष्टादशभेदोद्भावनमिन्द्रजालमात्रं तथा नोपयुज्यत इति मया

शुद्धाधिकाधिकद्वादशिका, शुद्धाधिकानधिकद्वादशिका, शुद्धानधिकानधिकद्वादशिका, शुद्धानधिकाधिकद्वादशिका, तथा विद्धापीत्यष्टावेव भेदान्माधवाचार्यसंमतान्सारभूतानुद्भाव्य यथामति निर्णयः क्रियते ।

तत्र या तावच्छुद्धानधिकद्वादशिका तस्यां विवाद एव नास्ति । एवं शुद्धानधिकाधिकद्वादशिकायामपि ।

अत एव स्कन्दपुराणे—

"शुद्धा यदा समा हीना समा हीनाधिकोत्तरा ।
एकादशीमुपवसेन्न शुद्धां वैष्णवीमपि" ॥ इति ॥

एकादशी यदा शुद्धा सती सूर्योदयपर्यन्ता ततो न्यूना वा, उत्तरा द्वादशी ततोऽधिकापि भवति तदा शुद्धामेकादशीमेवोपवसेन्न वैष्णवीं द्वादशीमित्यर्थः ।

"न चेदेकादशी विष्णौ द्वादशीपरतः स्थिता ।
उपोष्यैकादशी तत्र यदीच्छेत्परमं पदम्" ॥

इति नारदवचनं च ।

"यदीच्छेत्परमं पद" मित्यर्थवादः । न तु पूर्वत्रोपवासविधौ मुमुक्षुरूपाधिकारिसमर्पकम् । मुमुक्षूणामुत्तरत्रैवोपवासस्य सर्वत्र विधानात्तदनौचित्यात् ।

ततश्च—

"एकादशी भवेत्पूर्णा परतो द्वादशी यदा ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥ इति ॥
"अविद्धापि च विद्धा स्यात्परतो द्वादशी यदि" ।

इत्यादीनि स्कन्दपुराणादिवचनानि द्वादशीदिने एकादश्या अपि कियत्याः सद्भावे द्रष्टव्यानि । "पूर्णाप्येकादशी त्याज्या वर्द्धते द्वितया

यदि" इति वचनान्तरादेकादश्या एव पूर्णत्वोक्त्या द्वादश्यास्तदनुक्त्या तस्या एकादशीयुक्तत्वस्यापि संभवाच्च।

यत्तु—

"संपूर्णैकादशी त्याज्या परतो द्वादशी यदि।
उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम्" ॥

इति वचनं द्वादश्याः शुद्धत्वाभिधानात्तद्विषये वक्तुं न शक्यते। तद्भागवततन्त्रादिवैष्णवग्रन्थान्तर्गतत्वात्पूर्वोक्तवैष्णवविषयम्। अनन्तभट्टमाधवादीनामपीदमेव संमतम्।

यत्तु हेमाद्रिणैवंविधे विषये शुद्धायामेकादश्यामुपवासविधानम्।

"उदयात्प्राग्यदा विप्रा मुहूर्त्तद्वयसंयुता।
संपूर्णैकादशी नाम तत्रैवोपवसेद्गृही" ॥

इति वचनाद्गृहिविषयम्। शुद्धद्वादश्युपवासविधानं तु—

"संपूर्णैकादशी यत्र द्वादशी चापरेऽहनि।
तत्रोपोष्या द्वादशी स्याद्द्वादश्यामेव पारणम् ॥
न गर्भे विशते जन्तुरित्याह भगवान्हरिः"।

इत्यादिवचनवशाद्यतिविषयमिति स्वसंमतं व्यवस्थान्तरमुक्तम्। तत्रोदयात्प्रागिति वचनं तावद्गृहिणामेव। कामनासम्भवेन गृहिपदस्य सकामपरत्वादेवकारेण च व्यतिरेकतात्पर्यावसतेः। सकामानामवैष्णवानामाप्यरुणोदयविद्धायां काम्योपवासनिषेधकम्। प्राग्लिखितवचनैकवाक्यत्वात्। "न गर्भे विशते" इत्यप्यन्यथाकरणे गर्भप्रवेशरूपदोषपरत्वेनार्थवादमात्रत्वाद्गर्भप्रवेशस्य च दुःखविनाभूतस्य सर्वजिहासितत्वेन गृहिविषयमपि सम्भवादुभयाधिक्यविषयत्वेन वा व्याख्येयम्।

यानि त्वेकादश्याः शुद्धत्वसम्पूर्णत्वमात्रमुक्त्वा द्वादश्या एव केवलाया आधिक्यं प्रतिपाद्य परदिने उपवासं विदधति बहूनि वचनानि दृश्यन्ते। तेषु एकादश्याधिक्यमप्युपलक्ष्यत इत्युक्तम्।

"एकादशी तु संपूर्णा सदशा चोत्तरा भवेत्।
पूर्णा भवेद्यदा नन्दा भद्रा चैव हि वर्धते" ॥

इत्यादिषु चशब्दवशात्तच्छ्रौतमपि वक्तुं शक्यते। येषु तु "उपोष्या द्वादशी शुद्धा त्रयोदश्यां तु पारण" मित्यादिषु द्वादश्याः शुद्धत्वाभिधानात्तदुपलक्षयितुं न शक्यते। तानि वैष्णवविषयाणि सर्वाणि वा तथेति दिक्।

अत एव—

"एका लिस्या तु संयुक्ता यदि विद्धा परा भवेत्।
अथवैकादशी नास्ति दशम्या चाप्यसंयुता ॥
कलाप्यकाष्ठा द्वादश्या यदि स्यादपरेऽहनि।
द्वादश द्वादशीर्हन्ति पूर्वस्मिन्पारणे कृते" ॥

इति यद्ब्रह्मपुराणवचनं शुद्धद्वादश्यां पारणनिषेधद्वारा, "अथवैकादशी नास्ति दशम्या वाथ संयुता" इत्युक्तायामनधिकायामपि शुद्धैकादश्यामुपवासप्रतिषेधकं सच्छुद्धद्वादश्यामेवोपवासं विदधाति। तदपि वैष्णवविषयम्। "समा हीनाधिकोत्तरा" इति वचनविरोधात्। संयुक्ताग्रहणादपि तथा। "उदयात्प्राग्दशम्यास्तु शेषः संयोग उच्यते" इति कूर्मपुराणात्। एका पूर्वदिनगता। लिस्या कलामात्रेण। अर्थाद्दशम्याः। परा परदिनगता।

यत्तु पृथ्वीचन्द्रोदये बृहन्नारदीयनाम्ना लिखितमनन्यगतिकं स्पष्टं वचनम्—

"संपूर्णैकादशी शुद्धा द्वादश्यां नैव किञ्चन।
द्वादशी च त्रयोदश्यामस्ति तत्र कथं भवेत्॥
पूर्वा गृहस्थैः कार्या स्यादुत्तरा यतिभिस्तिथिः"॥ इति।

तद्धेमाद्रिणाप्यलिखनात्सर्वैश्चैकादशीमात्रवृद्धौ विद्धैकादश्यां वा, गृहियतिव्यवस्थाप्रतिपादकवाक्यलिखनादनाकरम्। तस्माच्छुद्धाया-मनधिकायां द्वादश्याधिक्येऽपि पूर्वेद्युरेवोपवासः सर्वेषाम्। द्वितीयदिने द्वादश्याद्यपादमुत्तार्य तु पारणम्।

"द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः।
तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः"॥

इति विष्णुधर्मोत्तरात्।

केचित् "विष्णुतत्परः" इति वचनाद्वैष्णवविषयमेतदिति वदन्ति। एवमन्यत्रापि पारणादिने द्वादश्याद्यपादानुवृत्तौ द्रष्टव्यम्।

या तु शुद्धाधिकाधिकद्वादशिका तस्यां सर्वेषां परेद्युरेवो-पवासः। "पूर्णाप्येकादशी त्याज्या वर्धते द्वितयं यदि" इति स्कन्दपुराणवचनात्।

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि"॥

इति नारदवचनाच्च। एतद्विषयमेव—

"षष्टिदण्डात्मिकायाश्च तिथेर्निष्क्रमणे परे।
अकर्मण्यं तिथिमलं विद्यादेकादशीं विना"॥

इति गौडनिबन्धलिखितं वचनम्। षष्टिदण्डात्मिकाया इत्यविद्धोपलक्षणम्। गौरीव्रतादावप्येतस्यापवाद उक्तः। पारणं च परदिने द्वादशीमध्य एव। तद्योग्यद्वादशीलाभ इत्युक्तम्।

या तु शुद्धाधिकानधिकद्वादशिका तत्र सकामानां पूर्वेद्युर्निष्कामानामुत्तरेद्युरुपवासः। तथा च स्कन्दपुराणे—

"प्रथमेऽहनि संपूर्णा व्याप्याहोरात्रमास्थिता।
द्वादश्यां च तथा तात दृश्यते पुनरेव सा॥
पूर्वा कार्या गृहस्थैस्तु यतिभिश्चोत्तरा विभो" इति।

अत्र गृहस्थयतिपदे सकामनिष्कामपरे।

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां वसेत्"॥

इति मार्कण्डेयवचनैकवाक्यत्वात्।

"निष्कामस्तु गृही कुर्यादुत्तरैकादशीं सदा।
प्रातर्भवतु वा मा वा द्वादशी च द्विजोत्तमाः"॥

इति स्कन्दपुराणे गृहस्थस्यापि निष्कामस्योत्तरत्रोपवासविधानाच्च। तेनेदं निरस्तं सकामनिष्कामशब्दयोरेव गृहियतिपरत्वम्। गृहिणां प्रायः सकामत्वाद्यतीनां च निष्कामत्वात्। एवं सति वनस्थनैष्ठिकविधवानामप्युपलक्षणं भवतीति। सकामशब्दस्य गृहिमात्रपरत्वे निष्कामस्य तस्योत्तरत्रोपवासविधानानुपपत्तेः। एवं सति-

"पुनः प्रभातसमये घटिकैका यदा भवेत्।
अत्रोपवासो विहितो वनस्थस्य यतेस्तथा"॥

विधवायाश्च तत्रैव "परतो द्वादशी न चे" दित्यत्र वनस्थयतिविधवानैष्ठिकपरतया शब्दानामेकनिष्कामार्थोपलक्षकत्वात्। "द्वितीये द्विगुणं चरेत्। तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृति" रितिवदेकवाक्यता लभ्यते। अन्यथा प्रत्यधिकारिपर्यवसानगत्या वाक्यभेदो भवेत्।

माधवादीनां तु "निष्कामस्तु" इति वाक्यालिखनाद्गृहियत्यादिशब्दानां यथाश्रुतपरत्वमेव संमतम्। विष्णुप्रीतिकामैस्त्वेतद्दशीविषये दिनद्वयेऽप्युपवासः कर्त्तव्यः।

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत्॥
उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः"

इति वृद्धवशिष्ठवचनात्। लुप्यते सूर्योदयं न स्पृशति। तेन समापि गृह्यते।

ततश्च—

"संपूर्णैकादशी यत्र परतः पुनरेव सा।
त्रयोदशी उषः काल उपोष्या तत्र का भवेत्॥
उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः"।

इति स्कन्दपुराणवचने त्रयोदशी उषः काल इति न्यूनद्वादशीग्रहणमुपलक्षणम्।

अत्र केचिन्नैताभ्यां वचनाभ्यामेकमधिकारिणं प्रतीतरेतरयुक्तं तिथिद्वयमुपोष्यमिति विधीयते। एकनिमित्तकस्योपवासस्यावृत्तेरन्याय्यत्वादधिकारिकल्पनापत्तेश्च। किन्तु क्लृप्तेनैव गृहियतिरूपाधिकारिभेदेन पृथक्पृथक्तिथिद्वयमुपोष्यत्वेन विधीयते कैश्चित्पूर्वा कैश्चिदुत्तरेतीति वदन्ति।

तदयुक्तम्। द्वन्द्वसमानार्थकेन तिथी इत्येकशेषेणेतरेतरयोगस्य प्रतीतेः। "विष्णुप्रीणनतत्परै" रित्यधिकार्यम्। तस्यापि श्रुतत्वाच्च। इतरथैतस्यानर्थक्यापत्तेः। आवृत्तेश्च वाचनिकत्वान्नैकनिमित्तकस्येत्यादिदोषः। तस्मादाञ्जस्येन विष्णुकामेनाधिकारिणेतरेतरयुक्तं तिथिद्वयमुपोष्यमित्येव वचनार्थः।

अथ विद्धा निर्णीयते—

तत्र या विद्धाधिकाधिकद्वादशिका सा सर्वेषां परैव । तत्र विद्धानिषेधवाक्यान्यनन्तानि वैष्णवेष्विव स्मार्तेष्वपि निरङ्कुशं प्रवर्तन्ते । या च विद्धानधिकानधिकद्वादशिका सा सर्वेषां विद्धैव ।

तथा च पद्मपुराणम्—

"एकादशी दशाविद्धा परतोऽपि न वर्द्धते ।
यतिभिर्गृहिभिश्चैव सैवोपोष्या क्षये तिथिः" ॥ इति ॥

"परतो न वर्द्धते" इत्यनेनैकादश्याः साम्यमपि गृह्यते । क्षयोऽपि तस्याः साम्येऽपि यद्यपि संभवत्येव । एकादश्याः सूर्योदयास्पर्शात् । तथापि पृथक्क्षयग्रहणानर्थक्यापत्तेरत्र न्यूनत्वरूपः सूर्योदयात्प्राक्समाप्तिरूप एकादश्याः क्षयः क्षयशब्देन गृह्यते । स च यत्यर्थम् । साम्ये मुमुक्षूणामुत्तरत्रोपवासस्य वक्ष्यमाणत्वात् । यद्यपि चात्रैकादश्या एवानाधिक्यमुक्तम् । तथापि द्वादश्या अपि द्रष्टव्यम् ।

"दिनत्रयमृते देवि नोपोष्या दशमीयुता ।
सैवोपोष्या सदा पुण्या परतश्चेत्त्रयोदशी" ॥

इति स्कन्दपुराणे तस्याप्यभिधानात् ।

तथा—

"यदि दैवात्तु संसिध्येदेकादश्यां तिथित्रयम् ।
तत्र क्रतुशतं पुण्यं द्वादशी पारणे भवेत्" ॥

इति नारदवचनेऽपि ।

अन्यथा द्वितीयदिन उपवासे त्रयोदश्यां पारणं स्यादिति व्यतिरेकप्रतीतेरपि तथा ।

"एकादशी यदा विद्धा द्वादश्यां न प्रतीयते।
द्वादशी च त्रयोदश्यामस्ति तत्र कथं भवेत्॥
उपोष्या द्वादशी शुद्धा सर्वैरेव न संशयः"।

इति बृहन्नारदीये द्वादशीमात्राधिक्ये विद्धायां परत्रोपवास-विधानाच्च।

एतद्वचनैकवाक्यतयैव—

"एकादशी यदा लुप्ता परतो द्वादशी भवेत्।
उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम्"॥

इति व्यासवचनेऽपि तादृशे "यदीच्छेदि" त्यर्थवादमात्रम्।

न तु मुमुक्षुणामेवोत्तरत्रोपवासार्थमित्यभिप्रेतमेतद्वचनबला-द्विद्धायां द्वादशीमात्राधिक्ये सर्वेषामुत्तरत्रोपवासं वदतां माधवादीनाम्। एकादश्याश्च नाधिक्यं न्यूनत्वेन साम्येन च भवतीत्युक्तम्।

तत्र न्यूनत्वे "दिनत्रयमृते" इति "यदि दैवा" दिति च।

"द्विस्पृगेकादशी यत्र तत्र संनिहितो हरिः।
तामेवोपवसेत्काममकामो विष्णुतत्परः"॥

इति कूर्मपुराणं चोपोद्बलकानि विद्धोपवासे।

साम्येऽपि—

"एकादशी न लभ्येत सकला द्वादशी भवेत्।
उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत्॥
द्वादशी स्वल्पमल्पापि यदि न स्यात्परेऽहनि।
दशमीमिश्रिता कार्या महापातकनाशिनी"॥

इत्यादीनि ऋष्यश्रृङ्गवशिष्ठादीनां विद्धानुग्रहवचनानि सामान्यतः प्रवृत्तानि॥

या तु शुद्धाधिकानधिकद्वादशिका तत्र सकामानां पूर्वेद्युर्निष्कामानामुत्तरेद्युरुपवासः । तथा च स्कन्दपुराणे—

"प्रथमेऽहनि संपूर्णा व्याप्याहोरात्रमास्थिता ।
द्वादश्यां च तथा तात दृश्यते पुनरेव सा ॥
पूर्वा कार्या गृहस्थैस्तु यतिभिश्चोत्तरा विभो" इति ।

अत्र गृहस्थयतिपदे सकामनिष्कामपरे ।

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां वसेत्" ॥

इति मार्कण्डेयवचनैकवाक्यत्वात् ।

"निष्कामस्तु गृही कुर्यादुत्तरैकादशीं सदा ।
प्रातर्भवतु वा मा वा द्वादशी च द्विजोत्तमाः" ॥

इति स्कन्दपुराणे गृहस्थस्यापि निष्कामस्योत्तरत्रोपवासविधानाच्च । तेनेदं निरस्तं सकामनिष्कामशब्दयोरेव गृहियतिपरत्वम् । गृहिणां प्रायः सकामत्वाद्यतीनां च निष्कामत्वात् । एवं सति वनस्थनैष्ठिकविधवानामप्युपलक्षणं भवतीति । सकामशब्दस्य गृहिमात्रपरत्वे निष्कामस्य तस्योत्तरत्रोपवासविधानानुपपत्तेः । एवं सति-

"पुनः प्रभातसमये घटिकैका यदा भवेत् ।
अत्रोपवासो विहितो वनस्थस्य यतेस्तथा" ॥

विधवायाश्च तत्रैव "परतो द्वादशी न चे" दित्यत्र वनस्थयतिविधवानैष्ठिकपरतया शब्दानामेकनिष्कामार्थोपलक्षकत्वात् । "द्वितीये द्विगुणं चरेत् । तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृति" रितिवदेकवाक्यता लभ्यते । अन्यथा प्रत्यधिकारिपर्यवसानगत्या वाक्यभेदो भवेत् ।

माधवादीनां तु "निष्कामस्तु" इति वाक्यालिखनाद्गृहियत्या-दिशब्दानां यथाश्रुतपरत्वमेव संमतम्। विष्णुप्रीतिकामैस्त्वेतादृशे विषये दिनद्वयेऽप्युपवासः कर्त्तव्यः।

"संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत्॥
उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः"

इति वृद्धवशिष्ठवचनात्। लुप्यते सूर्योदयं न स्पृशति। तेन समापि गृह्यते।

ततश्च—

"संपूर्णैकादशी यत्र परतः पुनरेव सा।
त्रयोदशी उषः काल उपोष्या तत्र का भवेत्॥
उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः"।

इति स्कन्दपुराणवचने त्रयोदशी उषः काल इति न्यूनद्वादशी-ग्रहणमुपलक्षणम्।

अत्र केचिन्नैताभ्यां वचनाभ्यामेकमधिकारिणं प्रतीतरेतरयुक्तं तिथिद्वयमुपोष्यमिति विधीयते। एकनिमित्तकस्योपवासस्यावृत्तेरन्याय्यत्वादधिकारिकल्पनापत्तेश्च। किन्तु क्लृप्तेनैव गृहियतिरूपाधिकारिभेदेन पृथक्पृथक्तिथिद्वयमुपोष्यत्वेन विधीयते कैश्चित्पूर्वा कैश्चिदुत्तरेतीति वदन्ति।

तदयुक्तम्। द्वन्द्वसमानार्थकेन तिथी इत्येकशेषेणेतरेतर-योगस्य प्रतीतेः। "विष्णुप्रीणनतत्परै" रित्यधिकार्यम्। तस्यापि श्रुतत्वाच्च। इतरथैतस्यानर्थक्यापत्तेः। आवृत्तेश्च वाचनिकत्वान्नैकनिमित्तकस्येत्यादिदोषः। तस्मादाञ्जस्येन विष्णुकामेनाधिकारिणेतरेतरयुक्तं तिथिद्वयमुपोष्यमित्येव वचनार्थः।

अथ विद्धा निर्णीयते—

तत्र या विद्धाधिकाधिकद्वादशिका सा सर्वेषां परैव। तत्र विद्धानिषेधवाक्यान्यनन्तानि वैष्णवेष्विव स्मार्तेष्वपि निरङ्कुशं प्रवर्तन्ते। या च विद्धानधिकानधिकद्वादशिका सा सर्वेषां विद्धैव।

तथा च पद्मपुराणम्—

"एकादशी दशाविद्धा परतोऽपि न वर्द्धते।
यतिभिर्गृहिभिश्चैव सैवोपोष्या क्षये तिथिः" ॥ इति ॥

"परतो न वर्द्धते" इत्यनेनैकादश्याः साम्यमपि गृह्यते। क्षयोऽपि तस्याः साम्येऽपि यद्यपि संभवत्येव। एकादश्याः सूर्योदयास्पर्शात्। तथापि पृथक्क्षयग्रहणानर्थक्यापत्तेरत्र न्यूनत्वरूपः सूर्योदयात्प्राक्समाप्तिरूप एकादश्याः क्षयः क्षयशब्देन गृह्यते। स च यत्यर्थम्। साम्ये मुमुक्षूणामुत्तरत्रोपवासस्य वक्ष्यमाणत्वात्। यद्यपि चात्रैकादश्या एवानाधिक्यमुक्तम्। तथापि द्वादश्या अपि द्रष्टव्यम्।

"दिनत्रयमृते देवि नोपोष्या दशमीयुता।
सैवोपोष्या सदा पुण्या परतश्चेत्त्रयोदशी" ॥

इति स्कन्दपुराणे तस्याप्यभिधानात्।

तथा—

"यदि दैवात्तु संसिध्येदेकादश्यां तिथित्रयम्।
तत्र क्रतुशतं पुण्यं द्वादशी पारणे भवेत्" ॥

इति नारदवचनेऽपि।

अन्यथा द्वितीयदिन उपवासे त्रयोदश्यां पारणं स्यादिति व्यतिरेकप्रतीतेरपि तथा।

"एकादशी यदा विद्धा द्वादश्यां न प्रतीयते।
द्वादशी च त्रयोदश्यामस्ति तत्र कथं भवेत्॥
उपोष्या द्वादशी शुद्धा सर्वैरेव न संशयः"।

इति बृहन्नारदीये द्वादशीमात्राधिक्ये विद्धायां परत्रोपवासविधानाच्च।

एतद्वचनैकवाक्यतयैव—

"एकादशी यदा लुप्ता परतो द्वादशी भवेत्।
उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम्"॥

इति व्यासवचनेऽपि तादृशे "यदीच्छेदि" त्यर्थवादमात्रम्।

न तु मुमुक्षुणामेवोत्तरत्रोपवासार्थमित्यभिप्रेतमेतद्वचनबलाद्विद्धायां द्वादशीमात्राधिक्ये सर्वेषामुत्तरत्रोपवासं वदतां माधवादीनाम्। एकादश्याश्च नाधिक्यं न्यूनत्वेन साम्येन च भवतीत्युक्तम्।

तत्र न्यूनत्वे "दिनत्रयमृते" इति "यदि दैवा" दिति च।

"द्विस्पृगेकादशी यत्र तत्र संनिहितो हरिः।
तामेवोपवसेत्काममकामो विष्णुतत्परः"॥

इति कूर्मपुराणे चोपोद्बलकानि विद्धोपवासे।

साम्येऽपि—

"एकादशी न लभ्येत सकला द्वादशी भवेत्।
उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत्॥
द्वादशी स्वल्पमल्पापि यदि न स्यात्परेऽहनि।
दशमीमिश्रिता कार्या महापातकनाशिनी"॥

इत्यादीनि ऋष्यश्रृङ्गवशिष्ठादीनां विद्धानुग्रहवचनानि सामन्यतः प्रवृत्तानि॥

"अविद्धानि निषिद्धैश्चेन्न लभ्यन्ते दिनानि तु ।
मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः" ॥ इति च ॥

मुहूर्त्त पञ्चकं चारुणोदयमारभ्य । सूर्योदयादारभ्य तद्ग्रहणे त्रिमुहूर्त्ताधिकक्षयाभावाद्द्वितीयदिने एकादशीसत्त्वावश्यंभावेनाविद्धाऽलाभासंभवादित्युक्तम् । ततश्च दशमीव्याप्तौदयिकत्रिमुहूर्त्तोत्तरं प्रवृत्ताया एकादश्यास्त्रिमुहूर्त्तक्षीणायाः सूर्योदयसाम्यमेव भवति । एतदर्थमेव मुहूर्त्तपञ्चकनियमोऽपि । ततो वेधाधिक्ये "परतोऽपि न वर्द्धते" इत्यस्यासंभवात् । "यतिभिर्गृहिभिः" श्चेत्यत्र गृहिपदं च पुत्रवद्भिन्नविषयम् । तेषामेकादशीदिनक्षये उपवासप्रतिषेधात् ।

"एकादशीदिनक्षय उपवासं करोति यः ।
तस्य पुत्रा विनश्यन्ति मघायां पिण्डदो यथा" ॥ इति ॥
"दिनक्षये तु संप्राप्ते नोपोष्या दशमीयुता ।
यदीच्छेत्पुत्रपौत्राणामृद्धिं संपदमात्मनः" ॥ इति ॥
"एकादशीषु नष्टासु रविसंक्रमणे तथा ।
पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही" ॥

इत्यादिभिः । ततश्चास्मिन्विषये तैर्द्वादश्यामेवोपवासःकार्यः ।

"एकादश्यां यदा वत्स दिनक्षयतिथिर्भवेत् ।
अत्रोपोष्या द्वादशी स्यात्त्रयोदश्यां तु पारणम्" ॥ इति ॥
"एकादश्यां यदा राजन् दिनक्षयतिथिर्भवेत् ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्" ॥

इति पितामहगोभिलादिवचनेभ्यः ।

अत्र च यद्यपि पुत्रवद्गृहिविषयत्वं स्पष्टं न श्रूयते । तथाप्याकाङ्क्षावशादेव तद्विषयत्वं भवति । इतरेषां पूर्वत्रैवोपवासविधानेनाकाङ्क्षाऽभावात् । केषुचिद्वचनेषु पुत्रवद्गृहिविषयत्वेन क्लृप्तनिषेधसमभिव्याहाराच्च ।

तथा च कूर्मपुराणे—

"दिनक्षये तु संप्राप्ते उपोष्या द्वादशी भवेत् ।
दशमीशेषसंयुक्तां न कुर्वीत कदाचन" ॥ इति ॥

भविष्यत्पुराणेऽपि—

"दिनक्षये तु संप्राप्ते नोपोष्या दशमीयुता ।
उपोष्या द्वादशी शुद्धा त्रयोदश्यां च पारणम्" ॥ इति ॥

अत्र च निषेधवाक्येषूत्तरोपवासविधिवाक्येषु च तिथित्रयस्पृग्व्यारूपो ज्यौतिषपरिभाषितो दिनक्षयो गृह्यते । तेन तत्रैव पुत्रवद्गृहिणामुपवासनिषेधः । परत्र चोपवासः । सूर्योदयपर्यन्तत्वरूपे साम्ये तु पुत्रवतामपि पूर्वत्रैवोपवासः । निषेधाप्रवृत्तेः । तत्सापेक्षस्य च द्वादश्युपवासविधेरप्यप्रवृत्तेः । एतदभिप्रायेणैव च हेमाद्रौ भविष्यपुराणम्—

"एकादशी कलाप्येका परतो न च वर्धते ।
गृहिभिः पुत्रवद्भिश्च सैवोपोष्या तदा तिथिः" ॥ इति ॥

तथा "यतिभिर्गृहिभिश्चैव सैवोपोष्या क्षये तिथि" रित्येतद्वचनगतस्यापि क्षयशब्दस्य न्यूनत्वरूपदिनक्षयपरत्वस्योक्तत्वात्तत्रैव यतीनां पूर्वेद्युरुपवासो विद्धानधिकायाम् । साम्ये तु मुमुक्षुत्वाद्यतीनां शुद्धद्वादश्यामेवोपवासः ।

तथा च विष्णुरहस्ये—

"दशमीमिश्रिता पूर्वा पूर्णा च द्वादशी परा ।
एकादश्यां महाप्राज्ञ उपवासः कथं भवेत्" ॥

इत्युपक्रम्योक्तं "शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभि" रिति । अत्र परा परदिनगतैव । न तु पूर्वा "अहोरात्रं प्रविष्टा" इत्युक्त्या

एकादश्याः सूर्योदयपर्यन्तत्वप्रतीतिः । अन्यथा परशब्दस्य वैयर्थ्यापत्तेः ।

व्यासेनापि—

"दशमीमिश्रिता पूर्वा द्वादशी यदि लुप्यते ।
एकादश्यां महाप्राज्ञ उपवासः कथं भवेत् ॥
पारणं तु त्रयोदश्यां पूजयित्वा जनार्दनम्" । इति ।
लुप्यते त्रयोदश्यां न दृश्यत इत्यर्थः ॥

एवं सति—

"एकादशी दशाविद्धा द्वादशी न च वर्द्धते ।
तत्रोपोष्या द्वादशी स्यात्त्रयोदश्यां च पारणम्" ॥

इत्यादीनि सामान्यवचनान्यपि मुमुक्षुविषयाणि पुत्रवद्गृहिविषयाणि वा द्रष्टव्यानि ।

यत्तु—

"दिनक्षयेऽपि शुद्धैव द्वादशी मोक्षकाङ्क्षिभिः ।
उपोष्या दशमीविद्धा नोपोष्यैकादशी सदा" ॥

इति सुमन्तुसत्यव्रतवचनम्,

"उपोष्या द्वादशी शुद्धा एकादश्यां दिनक्षये ।
मुमुक्षुभिर्दशाविद्धा नोपोष्यैकादशी तिथिः" ॥

इति शारदापुराणवचनं च,

तत्र परिभाषितो दिनक्षयो न ग्राह्यः । किन्तु विद्धत्वात्सूर्योदयास्पर्शमात्रमेकादश्याः । तच्च द्वितीयसूर्योदयपर्यन्तत्वरूपे साम्येऽपि संभवत्येवेतीदमपि वचनद्वयं साम्यविषयमेव । न्यूनत्वविषयत्वे "यतिभिर्गृहिभिश्चैवे" ति वचनविरोधात् ।

न चैतद्विरोधात्तदेव साम्यविषयमस्त्विति वाच्यम्। न्यूनत्वे परा साम्ये पूर्वेत्यनौचित्यात्। न्यूनत्वे मुमुक्षूणां शुद्धद्वादश्युपवासाभ्युपगन्तॄणां साम्येऽपि तस्यैव संमतत्वाच्च। तेन यानधिकद्वादशिका न्यूनत्वेन विद्धानधिका तस्यां पुत्रवद्व्यतिरिक्तानां गृहिणां यतीनां च पूर्वत्रैवोपवासः। पुत्रवतामेव परेद्युः। साम्येन तु तादृश्यां गृहिणां सर्वेषां पूर्वेद्युरेव, यतीनां परमुत्तरेद्युरिति "यतिभिर्गृहिभिश्चैवे" ति "गृहिभिः पुत्रवद्भिश्चे" ति वचनद्वयाञ्जस्येन इतरेषां च तथा नाञ्जस्याभावेन व्यवस्था।

मदनरत्ने तु "सुमन्तुसत्यव्रतशारदापुराणवचनस्वरसात्तत्र सदाशब्दश्रवणाच्च विद्धन्यूनायामपि मुमुक्षूणां परेद्युरेवोपवासः। "यतिभिर्गृहिभिश्चे" ति यतिपदं तु नियमपर्यायनियतियुक्तामुमुक्षुनैष्ठिकवानप्रस्थादिपरमि" त्युक्तम्।

हेमाद्रिणा तु निर्णय एवमेव कृतः। यतिपदस्य तु कापि गतिर्न कृतेति।

यदपि तिथितत्त्वे कालविवेकसम्वत्सरप्रदीपादिषु दृष्टम्—

"एकादशीमुपवसेद्द्वादशीमथवा पुनः।
विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित्॥
कुर्यादलाभे संयुक्तां नालाभेऽपि प्रवेशिनीम्।
उपोष्य द्वादशीं तत्र त्रयोदश्यां तु पारणम्॥
उदयात्प्राग्दशम्यास्तु शेषः संयोग इष्यते।
उपरिष्टात्प्रवेशस्तु तस्मात्तां परिवर्जयेत्"॥

इति कूर्मपुराणवचनमुभयानाधिक्येऽपि विद्धानिषेधपूर्वकं द्वादश्युपवासविधायकमुदाहृतम्।

"उदयोपरिविद्धा तु दशम्यैकादशी यदि।
दानवेभ्यः प्रीणनार्थं दत्तवान्पाकशासनः॥

"अविद्धानि निषिद्धैश्चेन्न लभ्यन्ते दिनानि तु ।
मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः" ॥ इति च ॥

मुहूर्त्तं पञ्चकं चारुणोदयमारभ्य । सूर्योदयादारभ्य तद्ग्रहणे त्रिमुहूर्त्ताधिकक्षयाभावाद्द्वितीयदिने एकादशीसत्त्वावश्यंभावेनाविद्धाऽलाभासंभवादित्युक्तम् । ततश्च दशमीव्याप्तौदयिकत्रिमुहूर्त्तोत्तरं प्रवृत्ताया एकादश्यास्त्रिमुहूर्त्तक्षीणायाः सूर्योदयसाम्यमेव भवति । एतदर्थमेव मुहूर्त्तपञ्चकनियमोऽपि । ततो वेधाधिक्ये "परतोऽपि न वर्द्धते" इत्यस्यासंभवात् । "यतिभिर्गृहिभि" श्चेवेत्यत्र गृहिपदं च पुत्रवद्भिन्नविषयम् । तेषामेकादशीदिनक्षये उपवासप्रतिषेधात् ।

"एकादशीदिनक्षय उपवासं करोति यः ।
तस्य पुत्रा विनश्यन्ति मघायां पिण्डदो यथा" ॥ इति ॥
"दिनक्षये तु संप्राप्ते नोपोष्या दशमीयुता ।
यदीच्छेत्पुत्रपौत्राणामृद्धिं संपदमात्मनः" ॥ इति ॥
"एकादशीषु नष्टासु रविसंक्रमणे तथा ।
पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही" ॥

इत्यादिभिः । ततश्चास्मिन्विषये तैर्द्वादश्यामेवोपवासःकार्यः ।

"एकादश्यां यदा वत्स दिनक्षयतिथिर्भवेत् ।
अत्रोपोष्या द्वादशी स्यात्त्रयोदश्यां तु पारणम्" ॥ इति ॥
"एकादश्यां यदा राजन् दिनक्षयतिथिर्भवेत् ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्" ॥

इति पितामहगोभिलादिवचनेभ्यः ।

अत्र च यद्यपि पुत्रवद्गृहिविषयत्वं स्पष्टं न श्रूयते । तथाप्याकाङ्क्षावशादेव तद्विषयत्वं भवति । इतरेषां पूर्वत्रैवोपवासविधानेनाकाङ्क्षाऽभावात् । केषुचिद्वचनेषु पुत्रवद्गृहिविषयत्वेन क्लृप्तनिषेधसमभिव्याहाराच्च ।

तथा च कूर्मपुराणे—

"दिनक्षये तु संप्राप्ते उपोष्या द्वादशी भवेत्।
दशमीशेषसंयुक्तां न कुर्वीत कदाचन" ॥ इति ॥

भविष्यत्पुराणेऽपि—

"दिनक्षये तु संप्राप्ते नोपोष्या दशमीयुता।
उपोष्या द्वादशी शुद्धा त्रयोदश्यां च पारणम्" ॥ इति ॥

अत्र च निषेधवाक्येषूत्तरोपवासविधिवाक्येषु च तिथित्रयस्पृग्वाररूपो ज्यौतिषपरिभाषितो दिनक्षयो गृह्यते। तेन तत्रैव पुत्रवद्गृहिणामुपवासनिषेधः। परत्र चोपवासः। सूर्योदयपर्यन्तत्वरूपे साम्ये तु पुत्रवतामपि पूर्वत्रैवोपवासः। निषेधाप्रवृत्तेः। तत्सापेक्षस्य च द्वादश्युपवासविधेरप्यप्रवृत्तेः। एतदभिप्रायेणैव च हेमाद्रौ भविष्यपुराणम्—

"एकादशी कलाप्येका परतो न च वर्धते।
गृहिभिः पुत्रवद्भिश्च सैवोपोष्या तदा तिथिः" ॥ इति ॥

तथा "यतिभिर्गृहिभिश्चैव सैवोपोष्या क्षये तिथि" रित्येतद्वचनगतस्यापि क्षयशब्दस्य न्यूनत्वरूपदिनक्षयपरत्वस्योक्तत्वात्तत्रैव यतीनां पूर्वेद्युरुपवासो विद्धानधिकायाम्। साम्ये तु मुमुक्षुत्वाद्यतीनां शुद्धद्वादश्यामेवोपवासः।

तथा च विष्णुरहस्ये—

"दशमीमिश्रिता पूर्वा पूर्णा च द्वादशी परा।
एकादश्यां महाप्राज्ञ उपवासः कथं भवेत्" ॥

इत्युपक्रम्योक्तं "शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभि" रिति। अत्र परा परदिनगतैव। न तु पूर्वा "अहोरात्रं प्रविष्टा" इत्युक्त्या

एकादश्याः सूर्योदयपर्यन्तत्वप्रतीतिः । अन्यथा परशब्दस्य वैयर्थ्यापत्तेः ।

व्यासेनापि—

"दशमीमिश्रिता पूर्वा द्वादशी यदि लुप्यते ।
एकादश्यां महाप्राज्ञ उपवासः कथं भवेत् ॥
पारणं तु त्रयोदश्यां पूजयित्वा जनार्दनम्" । इति ।
लुप्यते त्रयोदश्यां न दृश्यत इत्यर्थः ॥

एवं सति—

"एकादशी दशाविद्धा द्वादशी न च वर्द्धते ।
तत्रोपोष्या द्वादशी स्यात्त्रयोदश्यां च पारणम्" ॥

इत्यादीनि सामान्यवचनान्यपि मुमुक्षुविषयाणि पुत्रवद्गृहिविषयाणि वा द्रष्टव्यानि ।

यत्तु—

"दिनक्षयेऽपि शुद्धैव द्वादशी मोक्षकाङ्क्षिभिः ।
उपोष्या दशमीविद्धा नोपोष्यैकादशी सदा" ॥

इति सुमन्तुसत्यव्रतवचनम्,

"उपोष्या द्वादशी शुद्धा एकादश्यां दिनक्षये ।
मुमुक्षुभिर्दशाविद्धा नोपोष्यैकादशी तिथिः" ॥

इति शारदापुराणवचनं च,

तत्र परिभाषितो दिनक्षयो न ग्राह्यः । किन्तु विद्धत्वात्सूर्योदयास्पर्शमात्रमेकादश्याः । तच्च द्वितीयसूर्योदयपर्यन्तत्वरूपे साम्येऽपि संभवत्येवेतीदमपि वचनद्वयं साम्यविषयमेव । न्यूनत्वविषयत्वे "यतिभिर्गृहिभिश्चैवे" ति वचनविरोधात् ।

न चैतद्विरोधात्तदेव साम्यविषयमस्त्विति वाच्यम्। न्यूनत्वे परा साम्ये पूर्वेत्यनौचित्यात्। न्यूनत्वे मुमुक्षूणां शुद्धद्वादश्युपवासाभ्युपगन्तॄणां साम्येऽपि तस्यैव संमतत्वाच्च। तेन यानधिकद्वादशिका न्यूनत्वेन विद्धानधिका तस्यां पुत्रवद्व्यतिरिक्तानां गृहिणां यतीनां च पूर्वत्रैवोपवासः। पुत्रवतामेव परेद्युः। साम्येन तु तादृश्यां गृहिणां सर्वेषां पूर्वेद्युरेव, यतीनां परमुत्तरेद्युरिति "यतिभिर्गृहिभिश्चैवे" ति "गृहिभिः पुत्रवद्भिश्चे" ति वचनद्वयाञ्जस्येन इतरेषां च तथा नाञ्जस्याभावेन व्यवस्था।

मदनरत्ने तु "सुमन्तुसत्यव्रतशारदापुराणवचनस्वरसात्तत्र सदाशब्दश्रवणाच्च विद्धन्यूनायामपि मुमुक्षूणां परेद्युरेवोपवासः। 'यतिभिर्गृहिभिश्चे' ति यतिपदं तु नियमपर्यायनियतियुक्तामुमुक्षुनैष्ठिकवानप्रस्थादिपरमि" त्युक्तम्।

हेमाद्रिणा तु निर्णय एवमेव कृतः। यतिपदस्य तु कापि गतिर्न कृतेति।

यदपि तिथितत्त्वे कालविवेकसम्वत्सरप्रदीपादिषु दृष्टम्—

"एकादशीमुपवसेद्द्वादशीमथवा पुनः।
विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित्॥
कुर्यादलाभे संयुक्तां नालाभेऽपि प्रवेशिनीम्।
उपोष्य द्वादशीं तत्र त्रयोदश्यां तु पारणम्॥
उदयात्प्राग्दशम्यास्तु शेषः संयोग इष्यते।
उपरिष्टात्प्रवेशस्तु तस्मात्तां परिवर्जयेत्"॥

इति कूर्मपुराणवचनमुभयानाधिक्येऽपि विद्धानिषेधपूर्वकं द्वादश्युपवासविधायकमुदाहृतम्।

"उदयोपरिविद्धा तु दशम्यैकादशी यदि।
दानवेभ्यः प्रीणनार्थं दत्तवान्पाकशासनः॥

दशम्यैकादशी विद्धा गान्धारी तामुपोषिता।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत्॥
ये कारयन्ति कुर्वन्ति दशम्यैकादशीं युताम्।
आलोक्य तन्मुखं ब्रह्मन् सूर्यदर्शनमाचरेत्" ॥

इत्यादीनि च सामान्यवचनानि तदनुरोधेनासंकोचेनैव व्याख्यातानि। तत्र कूर्मपुराणवचनं तावदाचार्यचूडामणिप्रभृतिभिर्गौडैरपि न लिखितमनाकरमिव प्रतिभाति। साकरमपि वा मुमुक्षुविषयं पुत्रवद्गृहस्थविषयं वा व्यख्येयम्। सामान्यवचनानि त्वाधिक्यविषयाण्यपि व्याख्यातुं शक्यन्त एव। तेषामसंकोचे विद्धानुग्रहवचनानां सर्वेषामानर्थक्यापत्तेः। तेषां कथञ्चिदरुणोदयविद्धाविषयतया व्याख्यानेऽपि "मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथि" रितीदं विद्धानुग्रहवचनं बोपदेवानन्तभट्टहेमाद्र्यादिभिर्दाक्षिणात्यैराचार्यचूडामणिप्रभृतिभिश्च गौडैरपि धृतमत्यन्तानर्थकं स्यात्। तस्मादुभयानाधिक्ये विद्धापि पूर्वोक्तव्यवस्थया ग्राह्यैवेति।

या च विद्धाधिकानधिकद्वादशिका सा सर्वैरपि परैवोपोष्या। द्वादश्यनाधिक्यं द्वेधा सूर्योदयपर्यन्तत्वेन ततोऽर्वागेव समाप्त्या वा। उभयथापि परा। तत्राद्ये पक्षे वचनानि—

पद्मपुराणे—

"द्वादशीमिश्रिता कार्या सर्वत्रैकादशी तिथिः।
द्वादशी च त्रयोदश्यां विद्यते यदि वा न वा" ॥ इति ॥

तथा—

"सर्वत्रैकादशी ग्राह्या द्वादशीमिश्रिता नरैः।
प्रातर्भवतु वा मा वा यतो नित्यमुपोषणम्" ॥ इति ॥

उपोषणं नित्यं प्राधानम्। तत्र चान्त्यकलावच्छिन्नैकादशी मुख्या। तादृशी चाधिक्ये द्वादश्यां लभ्यत इति सैवोपोष्या। पारणं त्वङ्गम्। तत्रापि द्वितीयदिनेऽन्त्यकलावच्छिन्ना द्वादशी यदि लभ्यते, यथोभयाधिक्ये, तदा सम्यगेव। नो चेत्तत्त्रयोदश्यामपि भवत्वित्यर्थः।

अत एव नारदः—

"द्वादश्यैकादशी यत्र संगता त्रिदशाधिप।
तामुपोष्य ततः कार्यं त्रयोदश्यां तु पारणम्"॥

स्कन्दपुराणेऽपि—

"एकादशी कला यत्र परतो द्वादशी भवेत्।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम्"॥

परतः एकादशीकलोत्तरम्। द्वितीयपक्षे कूर्मपुराणे—

"एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम्"॥

स्कन्दपुराणेऽपि—

"एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
सोपोष्या च प्रयत्नेन महापुण्यविवर्द्धनी"॥ इति॥

अस्मिंश्च द्वादशीदिनक्षये पुत्रवद्गृहस्थैरुपवासो न कार्यः।

"एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः"॥

इति कूर्मपुराणवचनात्।

किन्तु तैस्तत्र नक्तं कार्यम्। तथा च वृद्धशातातपः—

"एकादशी यदा विद्धा द्वादशी च क्षयं गता।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते" ॥ इति ॥

स्कन्दपुराणेऽपि—

"एकादशी कला यत्र द्वादशी च क्षयं गता।
तत्र नक्तं प्रकुर्वीत नोपवासं गृहाश्रमी" ॥ इति ॥

केचित्तु पूर्वोक्ते एकादशीदिनक्षये अत्र च द्वादशीदिनक्षये "उपवासनिषेधे तु किंचिद्भक्ष्यं प्रकल्पये दिति सामान्यवचनात्" "नक्तं हविष्यान्न" मिति वचनोक्तभक्ष्यप्रकल्पनमुक्तम्। तत्तत्र विशेषतो द्वादश्युपवासविधाने, अत्र च नक्तविधाने सति विचारणीयम्।

एवं सति यानि—

"पारणाहे न लभ्येत द्वादशी कलयापि चेत्।
तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथिः" ॥

इत्यादीनि विद्धानुग्रहवचनानि। तानि सर्वाण्येकादश्या अप्यनाधिक्ये द्रष्टव्यानि।

यत्तु माधवेन "शुद्धाधिकावद्विद्धाधिकायामपि द्वादश्यनाधिक्ये गृहियतिव्यवस्थैव।

"एकादशी विवृद्धा चेच्छुक्ले कृष्णेऽविशेषतः।
उत्तरां तु यतिः कुर्यात्पूर्वामेव सदा गृही" ॥ इति ॥

प्राचेतससामान्यवचना,, दित्युक्तम्। तत् "संपूर्णैकादशी यत्र परत्र पुनरेव सा" इत्यादिबहुवचनैकवाक्यतया प्रचेतोवचनस्यापि शुद्धाविषयत्वस्यैव युक्तत्वादयुक्तम्।

या तु विद्धानधिकाधिकद्वादशिका तस्यां शुद्धद्वादश्यामेवोपवासो द्वादश्यामेव पारणं च । तत्पर्याप्तद्वादशीलाभे । तदलाभे तामुल्लङ्घ्यापि ।

तथा च नारदीये—

"उपवासदिनं विद्धं यदा भवति पूर्वया ।
द्वितीयेऽह्नि यदा न स्यात्स्वल्पाप्येकादशी तिथिः ॥
तत्रोपवासो विहितः कथं तद्वद सूतज ।

सूत उवाच—

यदा न प्राप्यते विप्रा द्वादश्यां पूर्ववासरः ।
रविचक्रार्धमात्रोऽपि तदोपोष्यं परं दिनम् ॥
उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारयेत् ।
निर्गता चेत्त्रयोदश्यां कला वा द्विकलापि चेत्" ॥ इति ॥

ब्रह्मवैवर्त्तेऽपि—

"एकादशी यदा लुप्ता परतो द्वादशी भवेत् ।
उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदम्" ॥ इति ॥

यदीच्छेदित्यर्थवादमात्रम् । न चैकादशीनिमित्त उपवासः कथं द्वादश्याम् । न हि तिथ्यन्तरेष्वेवं कुत्रापि दृष्टमिति वाच्यम् । किमत्र दर्शनेन वाचिनकेऽर्थे । किं हि वचनं न कुर्यात् । नास्ति वचनस्यातिभारः ।

अत एवोक्तं कूर्मपुराणे—

"एकादशीमुपवसेद्द्वादशीमथवा पुनः ।
विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित्" ॥ इति ।

अत एव चैकादशीव्रतमपि "द्वादशी मे सदा प्रिया" इत्यादिषु।

यानि तु विद्धानुग्रहवचनानि, तानि यथा—

"एकादशी दिशायुक्ता परतोऽपि न वर्द्धते॥
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः"।

इतिवचनबलात्परत एकादश्यभावे प्रवर्त्तन्ते॥

तथा—

"पारणाहे न लभ्येत द्वादशी कलयापि चेत्।
तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथिः॥
त्रयोदश्यां यदा न स्याद्द्वादशी घटिकाद्वयम्।
दशम्यैकादशी विद्धा सैवोपोष्या तदा तिथिः॥
दशमीशेषसंयुक्ता उपोष्यैकादशी तदा।
यदा न स्यात्त्रयोदश्यां मुहूर्त्तं द्वादशीतिथिः"॥

इत्याद्यृष्यश्रृङ्गहारीतविष्णुरहस्यादिवचनबलात्परतो द्वादश्या अप्यभावे। अत एव वचनान्तरेषु सामान्योक्त्योभयाधिक्यस्यापि संग्रहः।

"एकादशीं दिशायुक्तां वर्द्धमाने विवर्जयेत्।
क्षयमार्गस्थिते सोमे कुर्वीत दशमीयुताम्"॥ इति॥
"एकादशी भवेत्काचिद्दशम्या दूषिता तिथिः।
वृद्धिपक्षे भवेद्दोषः क्षयपक्षे तु पुण्यदः"॥ इति च।

सोमश्चान्द्री तिथिः।

गौडनिबन्धेषु तु "पक्षहानौ स्थिते सोमे लङ्घयेद्दशमीयुताम्" इत्युत्तरार्द्धपठितं शुक्लपक्षे दशमीविद्धा सर्वथा न कर्त्तव्या कृष्णपक्षे तादृश्यपि कर्त्तव्येत्येतदर्थत्वेन च वचनव्याख्यानम्।

तदयुक्तम्। किं यद्दशमीयुक्तामेकादशीं केषुचिद्विषयेषु वर्जयेत्तच्छुक्लपक्ष एवेत्येतत्परमिदं वचनम्, उत यद्दशमीयुतां केषुचिद्विषयेषु कुर्वीत तत्कृष्णपक्ष इत्येतत्परम्। आद्ये उभयवृद्ध्यन्तरवृद्ध्योरपि कृष्णपक्षे विद्धायाः कर्त्तव्यतापत्तिः। अन्त्ये उभयानाधिक्येऽपि शुक्लपक्षे तस्यास्त्यागापत्तिः। न चैतत्तेषामपीष्टम्। पूर्वोक्तव्यवस्थायास्तु पक्षद्वयविषयत्वे इदं वचनं व्यर्थमेव।

यदपि तिथितत्त्वे—

"दशमीशेषसंयुक्तो यदि स्यादरुणोदयः।
नैवोपोष्यं वैष्णवेन तद्दिने नैकादशीव्रतम्"॥

इति वचनात्सर्वदा वैष्णवस्य यदरुणोदयविद्धावर्जनं प्राप्तं तच्छुक्लपक्ष एवेत्येतदर्थत्वेनैतद्वचनव्याख्यानम्। तदपि वैष्णवारुणोदयविद्धापरत्वेऽस्य वचनस्य कस्यचिद्धेतोरभावाद्वैष्णवसमाचारविरोधाच्चायुक्तम्।

किं च "पक्षहानौ स्थिते सोमे" इत्यत्र सोमहानिपक्ष इत्ययमर्थः कथं प्रतीयते। येन कृष्णपक्षप्रतीतिः स्यात्। वृद्धिपक्षे क्षयपक्ष इत्यत्रापि वृद्धिक्षययोश्चन्द्रसंबन्धित्वे न किञ्चित्प्रमाणम्। तिथिसंबन्धित्वं तु तिथिसमभिव्याहारादेव गम्यते। तथा सति—

"यथा मलिम्लुचः पूर्वो दैवो मासस्तथोत्तरः।
त्याज्या तिथिस्तथा पूर्वा वृद्धौ ग्राह्या सदोत्तरा"॥

इति सामान्यवचनैकवाक्यतापि लभ्यते। अत एव च—

"तिथिः सशल्या परिवर्जनीया धर्मार्थकामेषु बुधैर्मनुष्यैः।
विहीनशल्यापि विवर्जनीया यदाग्रतो वृद्धिमुपैति पक्षे"॥

इत्यपि वचनं पक्षशब्दस्यापि तिथिपरत्वादेकादशीविषयं पूर्वोक्तव्यवस्थानुगुण्येनैव व्याख्यातमनन्तभट्टादिभिः । पक्षशब्दस्वरसात्पक्षवर्द्धनीविषयं वा व्याख्येयम् । न तु कथंचिदत्रापि शुक्लपक्षप्रतीतिः । तस्माद्द्वादशीमात्राधिक्येऽपि द्वादश्यामेवोपवासः पक्षद्वयेऽपि ।

यत्तु समयोद्योते—

"सर्वत्रैकादशी कार्या दशमीमिश्रिता नरैः ।
प्रातर्भवतु मा वा भूद्यतो नित्यमुपोषणम्" ॥

इति वचनं लिखित्वा तच्च प्रातस्त्रयोदश्यां द्वादशी भवतु मा वा भूदिति व्याख्याय तेन त्रयोदश्यां द्वादशीसत्त्वेऽपि विद्धायामेवोपवास"इत्युक्तम् । तत्र दशमीमिश्रितैकादशीत्युक्ते तदुत्तराव्यवहितप्रातःकालस्यैव प्रातःपदात्प्रतीतेस्त्रयोदशीप्रातःकालविषयत्वेन व्याख्यानं तावदयुक्तम् । अव्यवहितोत्तरप्रातर्ग्रहणे तु द्वादश्यां प्रातरेकादशी भवतु मा वाभूदित्यर्थः स्यात् । ततश्चैकादशीमात्राधिक्ये विद्धायामुपवासः स्यात्तदपि बहुवचनविरुद्धमिति हेमाद्र्यादिसकलनिबन्धेषु दृष्टम् । "सर्वत्रैकादशी कार्या द्वादशीमिश्रिता नरै" रित्येवं रूपमेव तद्वचनम् । तेन यथोक्तैव व्यवस्था । एवमष्टस्वपि भेदेष्वेकादशी निर्णीता ।

तेनैष संग्रहः ।

सर्वैरप्युपनीतैश्च शक्तैस्तत्कालमात्रके ।
भक्ष्यमात्रं न भोक्तव्यं शुक्ले कृष्णे हरेर्दिने ॥
तत्रापि गृहिणां कृष्णे तद्भिन्नानां च यत्र वा ।
निराहारस्थितिर्नोक्ता तत्र मूलादिभक्षणम् ॥

व्रतं तु नित्यं गृहिणां शुक्लायामेव पुत्रिणाम् ।
तद्भिन्नानां तु सर्वेषां कृष्णायामपि तद्भवेत् ॥
शयनीबोधनीमध्ये कृष्णायां पुत्रिणामपि ।
तत्रापि शुद्धगृहिणां पुत्रिणां नेति केचन ॥
वैष्णवानां तु सर्वस्यां कृष्णायामपि तद्भवेत् ।
निषेधो रविवारादौ तन्निमित्तोपवासगः ॥
श्राद्धप्राप्तावप्युपोष्यमाघ्राय पितृसेवितम् ।
कृष्णायामपि काम्यं तु पुत्रवद्गृहिणामपि ॥
सधवा पत्यनुज्ञानाद्व्रतादिष्वधिकारिणी ।
पुष्पालङ्कारवस्त्रादि व्रतेऽप्यस्या न दुष्यति ॥
शारीरनियमोपेतं व्रतं कार्यं रजस्यपि ।
आशौचे च तथा सर्वैः पूजामन्येन कारयेत् ॥
पारयित्वापि चान्तेऽङ्ग दानहोमादिकं भवेत् ।
नित्ये प्रारब्धकाम्ये च पयोमूलादिभक्षणम् ॥
नक्तैकभक्ताद्यपि वा भवेन्मुख्यसधर्मकम् ।
मुख्याशक्तावशक्तौ च तत्रापि स्त्रीसुतादिभिः ॥
द्विजोत्तमेन वा दत्त्वा दक्षिणां कारयेद्व्रतम् ।
विहितानामनुष्ठानं निषिद्धानां च वर्जनम् ॥
दिनत्रयगतं काम्येऽवश्यं कार्यं न नित्यके ।
सर्वेष्वेवोपवासेषु प्रातः पारणमिष्यते ॥
तेन माध्याह्निकमपि तत्रैवाकृष्य वर्त्तयेत् ।
द्वादश्याः प्रथमः पादः पारणाहे भवेद्यदि ॥
प्रातस्तदा तमुल्लङ्घ्य पारयेद्धस्विवासरम् ।
द्वादशी भुजिपर्याप्ता यदि तत्रैव पारयेत् ॥
प्रातर्मध्याह्नयोः कृत्यं नित्यं निर्वर्त्य चोषसि ।
त्रयोदश्याब्दिकालभ्ययोगादि यदि वारिणा ॥

भद्रान्तः पारयित्वापि स्वकाले तत्तदाचरेत् ।
सूर्योदयात्पूर्वतनमरुणोदयसंज्ञकम् ॥
मुहूर्त्तद्वितयं व्याप्याग्रिमसूर्योदयावधि ।
एकादशी स्थिता शुद्धा यदि तत्रारुणोदये ॥
दशमीसंयुता किञ्चिदपि विद्धा ततः स्मृता ।
सा विद्धा वैष्णवैर्नित्येऽप्येकस्या अथ निर्गमे ।
परित्याज्या तदन्यैस्तु काम्ये सति च संभवे ।
नित्यादौ सा त्वविद्धैव तान्प्रत्यथ तु सर्वदा ॥
विद्धा कदाचिद्ग्राह्यापि युक्ता सूर्योदये दिशा ।
एतावता विशेषेण व्यवस्थावचनं सताम् ॥
ग्रन्थे वैष्णवतद्भिन्नविषयत्वेन वेधयोः ।
एवं व्यवस्थिते वेधे विद्धा त्याज्यैव वैष्णवैः ॥
शुद्धाप्यन्यतराधिक्य इति वैष्णवनिर्णयः ।
वेधेनार्कोदयस्थेन क्रियते स्मार्तनिर्णयः ॥
शुद्धा विद्धा द्विधैकैका चतुर्धाधिक्यभेदतः ।
प्रथमाया द्वितीयाया उभयोर्नोभयोरिति ॥
तत्र यानधिका शुद्धा सैवोपोष्याखिलैरपि ।
द्वादश्या अधिकत्वेऽपि द्वायाधिक्ये परैव सा ॥
शुद्धाधिकायां द्वादश्या अनाधिक्ये यतिः पराम् ।
गृही पूर्वां हरिप्रीतिकामः कुर्याद्द्वयोमपि ॥
विद्धायामुभयाधिक्ये सर्वेषामुत्तरा मता ।
एकादश्या अनाधिक्ये विद्धाया न्यूनताकृते ॥
द्वादश्यनधिकत्वे च पुत्रीतरगृहाश्रमैः ।

यत्यादिभिश्च सोपोष्या पुत्रिभिर्द्वादशी तदा ॥
समत्वे न त्वनाधिक्ये विद्धायाः पुत्रिणामपि ।
पूर्वा परा मुमुक्षूणां न्यूनत्वेनापि नाधिका ॥
विद्धा परैव भिक्षूणामिति केचित्प्रचक्षते ।
विद्धाधिका यदा नन्दा द्वादश्यनधिका समा ॥
तदा परैव सर्वेषां न्यूना चेद्द्वादशी तदा ।
नक्तं स्यात्पुत्रिगृहिणां नन्दा त्वनधिका परा ॥
यदि स्यादधिका तत्र शुक्ले कृष्णेऽविशेषतः ।
द्वादश्यामुपवासश्च द्वादश्यामेव पारणम् ॥ इति ॥

## अथ काम्यैकादशीव्रतपद्धतिः ।

अयमत्र काम्योपवासप्रयोगक्रमः । दशम्यां दिवैव कांस्यमांसक्षारलवणादिवर्जं हविष्यमन्नमनत्याशं भुक्त्वा तदनन्तरं दन्तकाष्ठेन दन्तान्संशोध्य तस्यामेव रात्रौ श्वः करिष्यमाणोपवासोद्देशेन ग्राम्यमैथुनवर्जनभूमिशयनादिनियमान् दिनत्रयकर्त्तव्यान् स्वीकुर्यात् ।

ततो नियमेन तां रात्रिमतिवाह्य दन्तधावनवर्जं प्रातः स्नात्वा नित्यकृत्यं विधायार्धरात्रादर्वागेव समाप्तया दशम्या युक्तायामेकादश्यां चेदुपवासस्तदा प्रातरेव, तदूर्ध्वमप्यनुवर्त्तमानया युक्तायां चेदाद्यमेकादश्यर्द्धं त्यक्त्वा, सूर्योदयादुपर्यप्यनुवर्त्तमानया युक्तायां चेद्रात्रौ, दर्भपाणिरुदङ्मुखो यवतिलमिश्रवारिपूर्णं ताम्रमयं पात्रमादायामुकफलकामः—

"एकादश्यां निराहारः स्थित्वाहमपरेऽहनि ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत" ॥

इति मन्त्रेण तत्पात्रस्थजलप्रक्षेपेण संकल्पं कुर्यात् ।

ततः पुष्पाञ्जलिं देवाय समर्प्य पुनस्तत्पात्रे जलमादाय ॐ नमो नारायणायेति त्रिरभिमन्त्रितं तज्जलं पीत्वा विचित्रपुष्पविरचितायां पट्टवस्त्राद्यावृतपुष्पमण्डपिकायां वस्त्रद्वयावृतप्रतिमायां शालग्रामशिलायां वा मूलमन्त्रेण वैदिकमन्त्रेण प्रणवादिनमोऽन्तचतुर्थ्यन्तनाम्ना वा षोडशोपचारैर्यथाविभवं विष्णुं संपूज्य जपहोमप्रदक्षिणास्तोत्रपुराणवाचनश्रवणगीतवाद्यादिभिर्देवस्य पुरतस्तस्यां रात्रौ जागरणं विधाय प्रातः स्नात्वा संभाविताज्ञियमलोपांस्तत्तद्विशेषविहितप्रायश्चित्तेन—

"शारीरन्तःकरणोपघातं वाचश्च विष्णुर्भगवानशेषम्।
शमं नयत्वस्तु ममेह शर्म पापादनन्ते हृदि संनिविष्टे॥
अन्तःशुद्धिं बहिःशुद्धिं शुद्धो धर्ममयोऽच्युतः।
स करोतु ममैतस्मिञ्छुचिरेवास्मि सर्वदा॥
बाह्योपघातानघो बौद्धांश्च भगवानजः।
शमं नयत्वनन्तात्मा विष्णुश्चेतसि संस्थितः"॥

इति मन्त्रेण च समाधाय—

"अज्ञानतिमिरान्धस्य व्रतेनानेन केशव।
प्रसादसुमुखो नाथ ज्ञानदृष्टिप्रदो भव"॥

इति मन्त्रेणोपवासं विष्णवे समर्प्य पञ्चमहायज्ञान् कृत्वा यथाविभवं ब्राह्मणान् भोजयित्वा दक्षिणादानेन संतोष्य द्वादशी भोजनमात्रपर्याप्ता चेदुषस्येव माध्याह्निकपर्यन्तश्रौतवर्जं विधाय नैवेद्यतुलसीमिश्रेण निरामिषेण मधुमांसतैलोपोदक्याादिशाकवर्जितेनान्नेन कांस्यव्यतिरिक्ते भाजने यथाविभवं बन्धुभिः सह सकृद्भुक्त्वोपक्रान्तनियमयुक्तो रात्रिमतिवाहयेदिति। नित्ये तु शक्त्यविहितानुष्ठाननिषिद्धवर्जनोपेतमेकादश्यां वायुपर्यन्ताभ्यवहार्यानभ्यवहरणा-

त्मकं प्रधानमात्रमवश्यं कृत्वा द्वादश्यां पूर्ववत् पारणं कुर्यात्। अशक्तस्यानुकल्पा उक्ता एवेति।

* इत्येकादशीनिर्णयः *

## अथ विष्णोः शयनादिविवेचनम्।

कृष्णैकादश्युभयैकादश्यादिव्रतविशेषप्रकारास्तु व्रतकाण्डे द्रष्टव्याः। विष्णोः शयनपरिवर्त्तनप्रबोधोत्सवाश्चाषाढभाद्रपदकार्त्तिकशुक्लैकादशीषु कर्त्तव्याः।

तथा च ब्रह्मपुराणे—

"एकादश्यां तु शुक्लायामाषाढे भागवान् हरिः।
भुजङ्गशयने शेते तदा क्षीरार्णवे सदा॥
एकादश्यां तु शुक्लायां कार्त्तिके मासि केशवम्।
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः" ॥ इति ॥

भविष्योत्तरेऽपि—

"प्राप्ते भाद्रपदे मासि एकादश्यां दिने सिते।
कटिदानं भवेद्विष्णोर्महापातकनाशनम्" ॥ इति ॥

कटिदानमङ्गपरिवृत्तिकरणम्। मत्स्यपुराणेऽपि—

"शेते विष्णुः सदाषाढे भाद्रे च परिवर्त्तते।
कार्त्तिके च प्रबुध्येत शुक्लपक्षे हरेर्दिने" ॥ इति ॥

तत्रापि विशेषो "निशि स्वापो दिवोत्थानं संध्यायां परिवर्त्तन"मिति। आसु चैकादशीषु वक्ष्यमाणनक्षत्रतद्भागयोगो नियमतो नापेक्षितः। प्रमाणाभावात्। तथात्वे त्रयोदशीवदेकादश्या अपि वक्ष्यमाणवचनादेव प्राप्तिसिद्धेः, पुनर्वचनानर्थक्याच्च, निशादिवेलाविशेषस्त्वादरणीय एव।

विष्णुधर्मोत्तर एकादशीमारभ्य दिनपञ्चकं शयनप्रबोधोत्सवावुक्तौ—

"एकादश्यामाषाढस्य शुक्लपक्षे जनार्दनम् ।
देवाश्च ऋषयश्चैव गन्धर्वाप्सरसां गणाः ॥
अभिष्टुवन्ति ते गत्वा सततं दिनपञ्चकम् ।
उत्सवं चैव कुर्वन्ति गीतनृत्तसमाकुलम् ॥
ततस्तु चतुरो मासान्योगनिद्रामुपासते ।
सुप्तं च तमुपासन्ति ऋषयो ब्रह्मसंमिताः ॥
सशरीराणि शस्त्राणि भक्तास्तं देवमागताः ।
कार्त्तिकस्य सिते पक्षे तदेव दिनपञ्चकम् ॥
विबोधयन्ति देवेशं गत्वा सेन्द्रा दिवौकसः ।
देवास्तथैव कुर्वन्ति तदापि च महोत्सवम्" ॥ इति ॥

वाराहपुराणे त्वेतेष्वेव मासेषु शुक्लद्वादशीषु शयनादिक-मुक्तम्—

"आषाढमासे द्वादश्यां सर्वशान्तिकरं शुभम् ।
य एतेन विधानेन ज्ञात्वा मे कर्म कारयेत् ॥
स पुमान्न प्रणश्येत संसारेषु युगे युगे" ।

तथा—

"इयं च द्वादशी देव प्रबोधार्थं तु निर्मिता ।
त्वयैषा सर्वलोकानां हितार्थं शेषशायिना" ॥ इति ॥

मध्यवर्त्तिनि परिवर्त्तनेऽपि द्वादश्येव ग्राह्या । एताश्च द्वादश्यो रात्रिसंध्यादिनेषु अनुराधाश्रवणरेवतीनामादिमध्यान्तभाग-युक्ताः क्रमेण स्वापादिषु प्रशस्ताः ।

तथा च भविष्यत्पुराणे—

"आभाकासितपक्षेषु मैत्रश्रवणरेवति ।
आदिमध्यावसानेषु प्रस्वापावर्त्तनोत्सवाः" ॥ इति ॥

रेवतीत्यत्र षष्ठीलोपः। उत्सवो जागरः। अत एव च नारदीये वचनान्तरम्—

"मैत्राद्यपादे स्वपितीह विष्णुः, श्रुतेश्च मध्ये परिवर्त्तमेति"।
पौष्णावसाने च सुरारिहन्ता, प्रबुध्यते मासचतुष्टयेन ॥ इति ॥

यदा तु द्वादशीषु रात्र्यादिभागेषु तत्तन्नक्षत्रभागानामयोगस्तदा द्वादशीनक्षत्रमात्रयोगोऽपि रात्र्यादिगतो ग्राह्यः। "पादयोगो यदा न स्याद्दक्षेणापि तदा भवे" दिति वराहपुराणवचनात् ।

"विष्णुर्दिवा न स्वपिति न च रात्रौ विबुध्यते ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम्" ॥

इति विष्णुधर्मोत्तराच्च ।

यदा तु द्वादशीषु तानि नक्षत्राण्येकदेशेनापि न भवन्ति, किन्त्वेकादशीषु त्रयोदशीषु वा। तदा तत्रापि तत्तदृक्षभागयोगकाल एव निशादिवेलानादरेणैव प्रस्वापादि कार्यम्।

"अप्राप्ते द्वादशीमृक्षे उत्थानशयने हरेः।
पादयोगे न कर्त्तव्ये नाहोरात्रं विचिन्तयेत्" ॥

इति जीमूतवाहनोदाहृतवचनात् ।

उत्थानशयनग्रहणमहोरात्रग्रहणं चोपलक्षणम्। तेन परिवर्त्तनमपि पादयोगेनान्यतिथौ संध्यानादरेण कर्त्तव्यम्। अत एव "निशि स्वापः" इत्यस्योत्तरार्द्धं पादयोगादन्यतिथौ "द्वादश्यामृक्षसंगमा" दिति। "निशि स्वापः" इत्यादि च द्वादश्यामेवान्वेति। अन्यतिथौ "नाहोरात्रं विचिन्तये" दित्युक्तत्वात् ।

एवं च द्वादश्यां निशाद्यादरे अन्यतिथौ च नक्षत्रभागयोगादरे नियते यदा द्वादशीषु निशादेरन्यत्र तत्तद्दृक्षभागयोगोऽन्यतिथौ च तदितरनक्षत्रभागस्यैव योगः। तदा तत्तद्द्वादशीष्वेव प्रस्वापादि कर्त्तव्यम्। तत्र त्वयं विशेषः सायं संध्यायां प्रस्वापावर्त्तने प्रबोधश्चेति।

"द्वादश्यां संधिसमये नक्षत्राणामसंभवे।
आभाकासितपक्षेषु शयनावर्त्तनादिकम्" ॥

इति वाराहवचनात्।

"संधिसमये" इति शयनादावन्वेति। संधिसमयश्च सायं-संध्यैव।

"रेवत्यन्तो यदा रात्रौ द्वादश्यां च समागतः।
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम्" ॥

इति जीमूतवाहनोदाहृतवचनात्। रेवत्यन्तविबोधग्रहणं चोपलक्षणम्। क्वचित्तु आषाढकार्त्तिकपौर्णमास्योः प्रस्वापप्रबोधावुक्तौ।

तथा च यमः—

"क्षीराब्धौ शेषपर्यङ्के आषाढ्यां संविशेद्धरिः।
निद्रां त्यजति कार्त्तिक्यां तयोः संपूजयन् हरिम् ॥
ब्रह्महत्यादिकं पापं क्षिप्रमेव व्यपोहती" ति।

न चाषाढस्येयं कार्त्तिकस्येयमिति छविषयेऽप्यौत्सर्गिकाण्करणे-नाषाढीकार्त्तिकीपदे एकादशीपरे एवेति कल्पतरूक्तं युक्तम्।

"आषाढशुक्लपक्षान्ते भगवान्मधुसूदनः।
भोगिभोगे निजां मायां योगनिद्रां समाप्नुयात् ॥
शेतेऽसौ चतुरो मासान् यावद्भवति कार्त्तिकी।
विशिष्टा न प्रवर्त्तन्ते तदा यज्ञादिकाः क्रियाः" ॥

इति विष्णुधर्मोत्तरे "पक्षान्ते" इत्यस्य स्पष्टमभिधानात्। द्वादशी-पदमेकादशीपरमित्यपि तदुक्तमयुक्तम्।

"प्रतिपद्धनदस्योक्ता पवित्रारोपणे तिथिः।
श्रियो देव्या द्वितीया तु तिथीनामुत्तमा स्मृता॥
तृतीया स्याद्भवान्याश्च चतुर्थी तत्सुतस्य च।
पञ्चमी धर्मराजस्य तथा षष्ठी गुहस्य च॥
सप्तमी भास्करस्योक्ता दुर्गाया अष्टमी स्मृता।
मातॄणां नवमी चैव दशमी वासुकेः स्मृता॥
एकादशी ऋषीणां च द्वादशी चक्रपाणिनः।
त्रयोदशी ह्यनङ्गस्य शिवस्योक्ता चतुर्दशी॥
मम चैव मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता।
यस्य यस्य च देवस्य यन्नक्षत्रं तिथिस्तथा॥
तस्य देवस्य तस्मिंस्तु शयनावर्त्तनादिकम्"।

इति भोजदेवलिखितशयनतिथिक्रमवचनविरोधात्। तेन तिस्र-स्तिथयो वैकल्पिकाः शयनादिकालास्तेषां च यथासंप्रदायं व्यवस्थेत्येव युक्तम्।

चातुर्मास्यव्रतारम्भोऽप्याषाढशुक्लैकादशीद्वादशीपौर्णमासीषु कर्कसंक्रान्तिदिने वा विकल्पेन कर्त्तव्यः।

"एकादश्यां तु गृह्णीयात्संक्रान्तौ कर्कटस्य वा।
आषाढ्यां वा नरो भक्त्या चातुर्मास्योदितं व्रतम्"॥

इति सनत्कुमारवचनात्,

"आषाढशुक्लद्वादश्यां पौर्णमास्यामथापि वा।
चातुर्मास्यव्रतारम्भं कुर्यात्कर्कटसंक्रमे"॥

इति वाराहवचनाच्च,

यदा कदाप्यारम्भे समाप्तिः कार्त्तिकशुक्लद्वादश्यामेव कर्तव्या।

"चतुर्द्धापि हि तच्चीर्णं चातुर्मास्यव्रतं नरः ।
कार्त्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत्" ॥

इति वराहपुराण एवाभिधानात् ।

चतुर्द्धा एकादशीद्वादशीपौर्णमासीसंक्रान्तिष्वारब्धमित्यर्थः ।

मत्स्यपुराणे त्वनियमेनापि समापनमुक्तम्—"चतुरो वार्षिकान्मासान् देवस्योत्थापनावधिः" इति। कार्त्तिकमाहात्म्ये चतुर्दश्युपवासपूर्वकं पौर्णमास्यामुक्तम् । चातुर्मास्यव्रतारम्भश्च गुरुशुक्रमौढ्यादावपि कर्तव्यः ।

तथा च वृद्धगार्ग्यः—

"न शैशवं न मौढ्यं च शुक्रगुर्वोर्न वा तिथेः ।
खण्डत्वं चिन्तयेच्चादौ चातुर्मास्यविधौ नरः" ॥ इति ॥

तेन चातुर्मास्ये यत्किञ्चिद्व्रतमवश्यं कर्त्तव्यम् । अत एव महाभारते—

"आषाढे तु सिते पक्षे एकादश्यामुपोषितः ।
चातुर्मास्यव्रतं कुर्याद्यत्किंचिन्नियतो नरः" ॥ इति ॥

चातुर्मास्यव्रतानि च व्रतकाण्डादिषु द्रष्टव्यानि ।

आषाढे भाद्र ऊर्जे च प्रस्वापावर्त्तजागराः ।
कार्याः शुक्लैकादशीषु रात्रिसंध्यादिनेष्वपि ॥
यद्वा तन्मासतत्पक्षगतासु द्वादशीष्वमी ।
मैत्रश्रवणरेवत्यादिममध्यान्त्यभागकैः ॥
युक्तासु केवलर्क्षैर्वाप्यलाभे सर्वथा तु भैः ।
योगस्य द्वादशीष्वेते कार्यास्तिथ्यन्तरेष्वपि ॥
तत्तन्नक्षत्रभागेषु निशासंध्याद्यनादरात् ।
यदा निशादेरन्यत्र द्वादशीयुक्तभांशकैः ॥

योगोऽन्यभांशैरेवान्यतिथौ तत्तद्धरौ तदा ।
सायं प्रस्वापबोधौ वा शुच्यूर्जसितपर्वणोः ॥
एकादश्यां शुचौ शुक्ले हरौ पर्वणि संक्रमे ।
चातुर्मास्यव्रतारम्भः समाप्तिस्तूर्जशुक्लगे ।
हरौ पर्वणि वा कार्या प्रबोधस्य दिनेऽपि च ॥

इति संग्रहः ।

* इति विष्णोः शयनादिनिर्णयः *

## अथ श्रवणद्वादश्यादिविवेचनम् ।

अथ श्रवणद्वादश्यास्तदितरमहाद्वादशीनां च निर्णयः। तत्र द्वादश्या अल्पश्रवणयोगेऽपि श्रवणद्वादशीयोगप्रयुक्तमुपवासादि भवत्येव। न तूपवासकर्मकालभूताहोरात्रोभयव्याप्तये तदुभयस्पर्शाय वोदयादुदयपर्यन्तत्वमस्तसमयपर्यन्तत्वं वा तद्योगस्यापेक्षितम् ।
तदुक्तं मत्स्यपुराणे—

"द्वादशी श्रवणस्पृष्टा कृत्स्ना पुण्यतमा तिथिः ।
न तु सा तेन संयुक्ता तावत्येव प्रशस्यते" ॥ इति ॥

"यावती तेन संयुक्ता तावत्येव प्रशस्यत" इति तावत्यां कर्तुं शक्यं यत्संगमस्नानपूजादानादि तदेव कुर्यान्न तूपवासादि, तदपि च तद्योगकाल एव कुर्यान्न तु तत्पूर्वोत्तरकालयोरित्यपिनेत्यर्थः । श्रवणद्वादशीं प्रक्रम्य नारदीयेऽपि—

"तिथिनक्षत्रयोर्योगो योगश्चैव नराधिप ।
द्विकलो यदि लभ्येत स ज्ञेयो ह्यष्टयामिकः" ॥ इति ॥

योगः शिवयोगादिः शिवचतुर्दश्यादेः पुण्यतमत्वप्रयोजकः ।

यत्तु व्यतीपातवैधृत्यादेर्योगस्य तात्कालिकत्ववचनं तत्तन्मात्रप्रयुक्तदानादिविषयम् । "मुहूर्त्तमप्यहोरात्रे" इत्यादिवचनाद्रोहिणीयोगोऽपि श्रवणयोगवदेव॥ तेन नक्षत्रयोगप्रयुक्तेतरमहाद्वादश्यादिषूपवासे उदयादुदयपर्यन्तोऽस्तमयपर्यन्तो वा नक्षत्रयोगोऽवश्यमपेक्षितः । "तिथिनक्षत्रयो" रिति वचनस्य बहुनिबन्धेषु श्रवणद्वादशीप्रकरणगतत्वाभिधानेन तन्मात्रविषयत्वात् ।

केचित्त्वस्य सामान्यवचनत्वमङ्गीकृत्य श्रवणरोहिणीयोगवदल्पेनापीतरनक्षत्रयोगेनापि सकलायास्तिथेः पुण्यत्वमिच्छन्ति । तत्र श्रवणरोहिणीविषयस्य पुनर्वचनस्य प्रयोजनं चिन्त्यम् ।

तत्र या तावदेकस्मिन्नेव दिने श्रवणयोगवती शुद्धा शुद्धाधिका वा विद्धा विद्धाधिका वा तस्यां संदेह एव नास्ति । यदा विद्धाधिकाया दिनद्वयेऽपि श्रवणयोगस्तदैकादशीयुता ग्राह्या ।

"द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदा ।
स एव वैष्णवो योगो विष्णुश्रृङ्खलसंज्ञितः ॥
उपोष्य विधिवत्तत्र नरः संक्षीणकिल्बिषः ।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम्" ॥ इति ॥

मत्स्यपुराणवचनात् ।

तन्त्रेण च तदैकादशीद्वादशीप्रयुक्तमुपवासद्वयम् । तत्रैव यदा श्रवणमेकादशीं स्पृष्ट्वा द्वादशीं स्पृशति तदातिप्राशस्त्यमुक्तं नारदीये—

"संस्पृश्यैकादशीं राजन् द्वादशीं यदि संस्पृशेत् ।
श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति" ॥ इति ॥

यदा तु शुद्धाधिकाया दिनद्वयेऽपि श्रवणयोग उत्तरदिन एव चोदयकालीनः सः, तदोत्तरा ग्राह्या । "उदयव्यापिनी ग्राह्या श्रवणद्वादशी व्रते" इति बृहन्नारदीयवचनात् । एतस्य च शुद्धाधिकाविषये

सावकाशत्वान्न पूर्वविषये प्रवृत्तिः। तेन विद्धाधिकायामुत्तरदिने उदयकालीनश्रवणयोगेऽपि पूर्वस्या एव ग्रहणम्। अत एवाविरोधाच्च शुद्धाधिकापूर्वदिनेऽप्युदयकालीनश्रवणयोगवती पूर्वैव। कृत्स्नकर्मकालव्यापित्वात्।

यदा तु द्वादश्याः श्रवणयोग एव नास्ति। एकादश्येव तु तद्वती तदा तस्यामपि श्रवणद्वादशीप्रयुक्तं व्रतं कर्त्तव्यम्।

तदुक्तं नारदीये—

"यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित्।
एकादशी तदोपोष्या पापघ्नी श्रवणान्विता" ॥ इति ॥

विष्णुपुराणेऽपि—

"याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः।
तास्वेव तद्व्रतं कुर्याच्छ्रवणद्वादशीं विना" ॥ इति ॥

श्रवणद्वादशीव्रतं तु द्वादश्याः श्रवणयुक्ताया अलाभेऽप्येकादश्यामपि तादृश्यां कर्त्तव्यमित्यर्थः। यथा च "जया च विजया चैव जयन्ती पापनाशिनी" त्यभिधाय "पुष्यश्रवणपुष्याद्यरोहिणीसंयुतास्तथे" ति ब्रह्मवैवर्त्ते क्रमेण तासां लक्षणाभिधानाच्छ्रवणयुक्ता द्वादशी विजयसंज्ञा। तथा तादृश्या अलाभे तादृश्येकादश्यपि।

"एकादशी यदा शुक्ला श्रवणेन समन्विता।
विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा"।

इति भविष्योत्तरात्। किन्तु तदा तदुक्तप्रकारविशेषेण पूजादि कर्त्तव्यम्। विद्धाधिक्येऽपि चोत्तरदिने श्रवणयोगाभावे तादृशी दशमीविद्धापि ग्राह्या।

"दशम्यैकादशी यत्र सा नोपोष्या भवेत्तिथिः।
श्रवणेन तु संयुक्ता सा शुभा सर्वकामदा" ॥

इति वह्निपुराणात्। तदापि चैकादश्युपवासस्तेन सह तन्त्रमेव।

यद्यपि च भविष्योत्तरे नारदीयविष्णुपुराणवच्छ्रवणयुक्तद्वादश्यलाभविषयत्वं तादृश्यैकादश्या न प्रतीयते। किन्तु तल्लाभेऽपि स्वतन्त्रमिदमप्येकं व्रतमिति। मदनरत्नादावपि तथैवोक्तम्। पारणादिने च श्रवणापेक्षया द्वादश्याधिक्ये श्रवणमुल्लङ्घ्य द्वादशीमध्य एव पारणम्, न तु द्वादश्यन्तं प्रतीक्ष्य। द्वादश्यास्तत्रानुपोष्यत्वात्। द्वादश्यपेक्षया श्रवणाधिक्ये चोपोष्यं श्रवणमतिलङ्घ्य त्रयोदश्यामपि पारणम्।

"पारणं तिथिवृद्धौ तु द्वादश्यामुडुसंक्षयात्।
उडुवृद्धौ त्रयोदश्यां तत्र दोषो न विद्यते"॥

इति वह्निपुराणवचनादिति च पारणानिर्णयः कृतः।

तथापि नारदीयाद्येकवाक्यतया तत्रापि तादृशद्वादश्यलाभविषयत्वमेव तादृशैकादश्या द्रष्टव्यम्। लाघवात्। पूजादिप्रकारभेदोपदेशस्तु जयन्तीवदुपपन्नः। पारणाविषयं वह्निपुराणं च विष्णुशृङ्खलविषयं शुद्धाधिकाविषयं वा भविष्यति।

"एषा व्युष्टिः समाख्याता एकादश्या मया तव।
पृथगेव समाख्याता द्वादशी श्रवणान्विता"॥

इति भविष्योत्तरवचनं तु व्युष्टिग्रहणात्फलभेदाभिप्रायं न व्रतस्वरूपभेदाभिप्रायम्।

यदा चैकादशीश्रवणद्वादश्युपवासौ दिनभेदेन प्राप्नुतस्तदा शक्तेन द्वयमपि कर्तव्यम्।

तदुक्तं भविष्योत्तरे—

"एकादशीमुपोष्यैव द्वादशीमप्युपोषयेत्।
न तत्र विधिलोपः स्यादुभयोर्दैवतं हरिः"॥ इति॥

"पारणान्तं व्रतं ज्ञेयं व्रतान्ते विप्रभोजनम् ।
असमाप्ते व्रते पूर्वे नैव कुर्याद्व्रतान्तरम्" ॥

इति विष्णुधर्मोत्तरोक्तस्य पारणारूपाङ्गविधेस्तस्मिन्न कृते व्रतान्तरारम्भनिषेधविधेर्वा लोपो बाधो न स्यादुभयोरेकदेवत्यत्वादित्यर्थवादः। प्रधानत्वेन काम्यत्वेन निरवकाशत्वेन च पारणाङ्गबाधस्य व्रतान्तरोपक्रमस्य च चतुर्थीपञ्चम्यादाविव न्यायप्राप्तत्वेन विधिबाधाप्रसक्तेः। तत्समाधानानपेक्षणात्।

यस्तु श्रवणद्वादश्यन्तरे उपक्रान्तकतिचिद्वर्षव्यापिश्रवणद्वादशीव्रतप्रयोग उपवासद्वयासामर्थ्यनिश्चयाच्च कृतप्रकृतैकादशीव्रतसंकल्पः पश्चात्तत्रासमर्थः स संकल्पितमेकादश्युपवासं विधाय श्रवणद्वादश्यां तत्प्रयुक्तविष्णुपूजादि विधाय भुञ्जीत। संकल्पबाधप्रसङ्गाच्छेषिविरोधप्रसङ्गाच्च।

तदुक्तं मत्स्यपुराणे—

"द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि।
उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिम्" ॥ इति ॥

हरिपूजामेव कुर्यान्न तूपवासमित्यर्थः। उपवासकरणे तदङ्गहरिपूजायाः प्राप्तत्वादेव तद्विधिवैयर्थ्यात्।

यस्तु तादृशः प्रागेव निश्चितोपवासद्वयासामर्थ्यः स काम्यं नित्यस्य बाधकमिति न्यायेन श्रवणद्वादश्यामेवोपवासं कुर्यात्।
तदुक्तं नारदीये—

"उपोष्य द्वादशीं पुण्यां वैष्णवर्क्षेण संयुताम्।
एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयम् ॥
वाजपेये यथा यज्ञे कर्महीनोऽपि दीक्षितः।
सर्वं फलमवाप्नोति अस्नातोऽप्यहुतोऽपि सन्" ॥ इति ॥

दृष्टान्तेन वाचनिक इव न्याय्येऽपि बाधे प्रत्यवायो नास्तीति ज्ञाप्यते । वाजपेयपर्यन्तं गमनं बहुदीक्षत्वात् ।

श्रवणद्वादशीनिमित्तोपवासपारणं तु पारणादिने उभयानुवृत्ता-वुभयान्त इति मुख्यः पक्षः । "तिथिरष्टगुणं हन्ती" त्यादिवचनात् । अन्यतरान्त इति गौणः । "सांयोगिके" इत्यनेनोक्तस्य तस्य कालस्या-न्यत्रोभयान्ततुल्यत्वेऽपि, अत्र—

"याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः ।
ऋक्षान्ते पारणं कुर्याद्विना श्रवणरोहिणीम्" ॥

इति वचने श्रवणरोहिणीपर्युदासस्य श्रवणरोहिणीयोगनिमित्ते व्रते उभयान्तपक्षस्य मुख्यत्वद्योतनार्थत्वात् ।

न तु अत्र तिथ्यन्तोऽवश्यं प्रतीक्षणीयः । न तु नक्षत्रमात्रान्ते पारणं कर्त्तव्यमित्येतत्परमिदम् । "भान्ते कुर्यात्तिथेर्वापि" इत्यादिभि-र्वचनैर्नक्षत्रान्तेऽपि जयन्तीपारणविधानात्तद्विरोधापत्तेः । रोहिण्यंशे तद्योगादुक्तप्रयोजनार्थत्वस्यैवोचितत्वादित्यादि सर्वं जन्माष्टमी-प्रकरण एवोक्तम् ।

मदनरत्नादौ तु "जयन्त्यां नक्षत्रमात्रान्तपारणविधिवच्छ्रवण-द्वादश्यां तदभावात्पर्युदासवशादत्र नक्षत्रमात्रान्ते पारणं न भवत्येव । किन्तूभयान्ते तिथिमात्रान्ते वे" त्युक्तम् ।

इयं च श्रवणद्वादशीबुधवासरयुक्तातिप्रशस्ता ।

"श्रवणद्वादशीयोगे बुधवारो यदा भवेत् ।
अत्यन्तमहती नाम द्वादशी सा प्रकीर्तिता" ॥

इति विष्णुधर्मोत्तरवचनात् ।

भाद्रपदे सात्यन्तफलदा । तथा च स्कन्दपुराणे—

"मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ॥
बुधश्रवणसंयुक्ता सा चैव द्वादशी भवेत् ।
अत्यन्तमहती तस्यां दत्तं भवति चाक्षयम्" ॥ इति ॥

अत्र सङ्गमस्नानादि कर्त्तव्यम् ।

"स्नानं जप्यं तथा दानं होमः श्राद्धं सुरार्चनम् ।
सर्वमक्षय्यफलदं तस्यां भृगुकुलोद्वह ॥
तस्मिन्दिने तु यः स्नातो यत्र क्वचन संगमे ।
स गङ्गास्नानजं राम फलं प्राप्नोत्यसंशयम् ॥
श्रवणे संगमाः सर्वे परव्युष्टिप्रदाः सदा ।
विशेषाद्द्वादशीयुक्ते बुधयुक्ते विशेषतः ॥

इत्यादिविष्णुधर्मोत्तरेऽभिधानात् ।

इतरमहाद्वादशीस्वरूपं च ब्रह्मवैवर्त्तेऽभिहितम्—

"उन्मीलनी वञ्जुली च त्रिस्पृशा पक्षवर्द्धनी ।
जया च विजया चैव जयन्ती पापनाशिनी ॥
द्वादश्योऽष्टौ महापुण्याः सर्वपापापहा द्विज ।
तिथियोगेन जायन्ते चतस्रश्चापरास्तथा ॥
नक्षत्रयोगात्प्रबलं पापं प्रशमयन्ति ताः ।
एकादशी तु संपूर्णा वर्द्धते पुनरेव सा" ॥

तद्युक्ता द्वादशीत्यर्थः ।

"उन्मीलनी भृगुश्रेष्ठ कथिता पापनाशिनी ।
द्वादश्यामुपवासस्तु द्वादश्यामेव पारणम् ॥
वञ्जुली नाम सा प्रोक्ता हत्यायुतविनाशिनी ।
अरुणोदय आद्या स्याद्द्वादशी सकलं दिनम् ॥
अन्ते त्रयोदशी प्रातस्त्रिस्पृशा सा प्रकीर्त्तिता" ।

आद्या एकादशी । अरुणोदये सूर्योदये । "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्र्यहस्पृक् तदहोरात्र" मिति पद्मपुराणेऽहोरात्रे तिथित्रययोगस्योक्तत्वात् ।

"कुहूराके यदा वृद्धिं प्रयाते पक्षवर्द्धनी ।
विहायैकादशीं तत्र द्वादशीं समुपोषयेत्" ॥

इदमुपवासद्वयासमर्थं द्वादशीफलार्थिनं प्रति । श्रवणद्वादशीवत् ।

"पुष्यश्रवणपुष्याद्यरोहिणीसंयुतास्तथा ।
उपोषिताः समफला द्वादश्योऽष्टौ पृथक्पृथक्" ॥ इति ॥

पुष्याद्यं पुनर्वसुः । समस्वर्गादिफलाः । न तु कश्चिदासां मिथो विशेष इत्यर्थः । तत्र तिथिप्रयुक्तासु न कोऽपि संदेहः । श्रवणद्वादशी निर्णीतैव ।

नक्षत्रयोगप्रयुक्तेतरमहाद्वादशीत्रये सूर्योदयादारभ्य द्वितीयतत्पर्यन्तमस्तमयपर्यन्तं वा योगस्य सत्त्वमपेक्षितम् । "प्रातः संकल्पयेद्विद्वानुपवासव्रतादिक" मित्युपवाससंकल्पस्य सूर्योदयानन्तरकालत्वेनोपवासस्य चाहोरात्रसाध्यत्वेन "योग्यस्य विहितः कालः" "कर्मणो यस्य यः कालः" "दिवा रात्रौ व्रतं यच्चे" त्यादिसामान्यवचनेभ्यः । श्रवणरोहिणीयोगवच्चाल्पकालस्यापीतरनक्षत्रयोगस्य ग्राह्यत्वे प्रमाणाभावात्, "तिथिनक्षत्रयोर्योग" इत्यस्यप्रकरणाच्छ्रवणद्वादशीविषयत्वस्योक्तत्वात्,

"कृत्तिकादिभरण्यन्तं तारा वा वारसप्तकम् ।
नैते संयोगमात्रेण पुनन्ति सकलां तिथिम्" ॥

इति शङ्करगीतावचनविरोधाच्च । सामान्यविषयत्वेऽपि तस्य रोहिणीश्रवणद्वादश्योरेवोपसंहारस्य युक्तत्वात् । तयोर्विशेषवचनात् । पारणं तु निर्णीतमेव ।

एताश्चाष्टावपि महाद्वादश्यः काम्या एव। नित्यत्वे प्रमाणाभावात्। फलश्रवणाच्च। एवं "एकादशीं भुक्त्वा" इत्यस्य तु विषय उक्त एवेति नानेनापि नित्यत्वद्योतनम्।

यत्तु—

"न करिष्यन्ति ये लोके द्वादश्योऽष्टौ ममाज्ञया।
तेषां यमपुरे वासो यावदाभूतसंप्लवम्" ॥

इत्यकरणप्रत्यवायबोधकं पद्मपुराणनाम्ना केनचिल्लिखितं वचनम्। तदतिवैष्णवग्रन्थेष्वप्यदर्शनादनाकरमेवेति।

अल्पश्रवणयुक्तापि सकला द्वादशी शुभा।
तत्रैकस्मिन्नेव दिने तद्योगे नास्ति संशयः ॥
दिनद्वयेऽपि तद्योगवती विद्धाधिका यदि।
एकादशीयुता ग्राह्या या तु शुद्धाधिका तथा ॥
उत्तरैव भवेद्युक्ता श्रवणेनोदये रवेः।
सैव ग्राह्यान्यथा पूर्वैकादश्यामेव चेच्छ्रुतिः ॥
न द्वादश्यां तदाप्युक्तं श्रवणद्वादशीव्रतम्।
एकादशीं द्वादशीं च शक्तस्तूपवसेत्पृथक् ॥
प्रक्रान्तप्रकृतैकादश्युपवासोऽक्षमस्ततः।
विष्णुपूजामेव कृत्वा द्वादश्यां भोजनं चरेत् ॥
पूर्वमेवाक्षमः कामी द्वादशीमेव लङ्घयेत्।
द्वयान्तेऽन्यतरान्ते वा तिथिमात्रान्त एव वा ॥
पारयेत्फलभारोऽत्र बुधे भाद्रे विशेषतः।
अन्यासु महतीष्वृक्षयुतासु द्वादशीषु तु ॥

दिने रात्रौ च तत्सत्त्वं मुख्यं केचिद्यदा कदा ।
ऋक्षयोगेऽपि पूज्यत्वं जयन्तीवत्प्रचक्षते ॥
तिथियुक्तास्वसंदेहः काम्या अष्टावपि त्विमाः ॥

इति संग्रहः ।

इति श्रीरघुनाथवाजपेययाजिकृतौ श्रवणद्वादश्यादिनिर्णयः ॥

## अथ त्रयोदश्या विशेषविवेचनम् ।

अथ त्रयोदश्यां कश्चिद्विशेषः । शनिवारादियुक्तायां कांचिच्छुक्लत्रयोदशीमारभ्य संवत्सरं प्रतिपक्षत्रयोदशीषु शनिवारादियुक्तास्वेव चतुर्विंशतिशुक्लत्रयोदशीषु वा कर्त्तव्यं यत्प्रदोषसमयशिवपूजानक्तभोजनात्मकं प्रदोषव्रतं तत्र प्रदोषव्यापिनी त्रयोदशी ग्राह्या । प्रदोषश्च "त्रिमुहूर्त्तं प्रदोषः स्याद्रवावस्तं गते सती" त्युक्तः । तत्र शिवपूजनस्य प्रदोषकालत्वम् ।

"ततस्तु लोहिते भानौ स्नात्वा सनियमो व्रती ।
पूजास्थानं ततो गत्वा प्रदोषे शिवमर्चयेत्" ॥

इति स्कन्दपुराणे तद्व्रतविधावुक्तम् ।

नक्तभोजनस्य प्रदोषकालत्वं नक्तव्रतनिर्णये वक्ष्यते । तत्रान्यतरदिने प्रदोषव्याप्तौ तत्स्पर्शे वा सैव ग्राह्या । दिनद्वये प्रदोषव्याप्तौ साम्येन तदेकदेशस्पर्शे वोत्तरा । "प्रातः संकल्पयेद्विद्वानुपवासव्रतादिक" मिति संकल्पकालमारभ्य सत्त्वात् ।

"सदैव तिथ्योरुभयोः प्रदोषव्यापिनी तिथिः ।
तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः" ॥

इति जाबालिवचनाच्च ।

वैषम्येण तदेकदेशस्पर्शे तदाधिक्यवती पूर्वापि ग्राह्या। यदि देवपूजाभोजनपर्याप्तं तदाधिक्यम्। नो चेत्साम्यपक्षवदुत्तरैव। सायाह्नरूपगौणतत्काललब्धेरपि लाभात्। सायाह्नस्य च गौणं तत्कालत्वं प्रदोषस्पर्शाभावे तत्र नक्तविधानादवगम्यते।

तथा च स्कन्दपुराणे —

"प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते।
आत्मनो द्विगुणा छाया मन्दीभवति भास्करे॥
तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम्।
एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भुजिक्रियाम्॥
कुर्यान्नक्तव्रती नक्तफलं भवति निश्चितम्"॥ इति॥

तथा—

"मुहूर्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः।
नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप"॥

इति भविष्यत्पुराणेऽपि नक्षत्रदर्शनोर्ध्वकालस्य "अहं मन्ये" इत्युक्त्या मुख्यत्वं पूर्वार्द्धोक्तस्य च गौणत्वमवगम्यते। दिनं नक्तं नक्तव्रतयोग्यमित्यर्थः। नक्षत्रदर्शनादित्यत्रोर्द्ध्वमित्यध्याहारः, प्राप्येति ल्यब्लोपनिमित्ता वा पञ्चमी। अत एव च दिनद्वये प्रदोषस्पर्शाभावेऽप्युत्तरैव। न चात्रैकभक्तादिवन्मुख्यकालेऽनुष्ठानम्। किन्तु गौणकाल एव। "सायाह्ने तु भुजिक्रिया" मिति वचनात्तत्पूर्वस्य च पूजादेरप्यपकर्षेण तत्रैव कर्त्तव्यत्वात्।

गोवत्सद्वादशीव्रतेऽप्येवमेव निर्णयः। तत्रापि "नरो वा यदि वा नारी नक्तं संकल्प्य चेतसी" त्युपक्रमे "माषान्नं कामतोऽश्नीयाद्रात्रौ विगतमत्सरः" इति चान्ते नक्तभोजनविधानात्, "प्रतीक्षेतागमं भक्त्या गवां गोध्यानतत्परः" इति वचनाद्गोष्ठागतासु संध्यायां गोपूजाविधानात्। एवमेवंजातीयकेऽन्यत्रापि।

# अथ वारुणीविवेचनम्।

पौर्णमास्यन्तचैत्रकृष्णत्रयोदशी शतभिषायुता वारुणी। तत्र गङ्गास्नानं महाफलम्। तथा च स्कन्दपुराणे—

"वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा" ॥ इति ॥

सैव शनिवारयोगे महावारुणी, शुभयोगयोगे महामहावारुणी अधिकफला च। तथा च तत्रैव—

"शनिवारसमायुक्ता सा महावारुणी स्मृता।
गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा॥
शुभयोगसमायुक्ता शनौ शतभिषा यदि।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत्" ॥ इति ॥

यश्च त्रयोदश्यां क्षत्रियादीनां शतभिषायां च स्त्रीणां स्नाननिषेधो जाबालीयः—

"त्रयोदश्यां तृतीयायां दशम्यां च विशेषतः।
शूद्रविट्क्षत्रियाः स्नानं नाचरेयुः कथञ्चन" ॥ इति,
"स्नानं कुर्वन्ति या नार्यश्चन्द्रे शतभिषां गते।
सप्त जन्म भवेयुस्ता दुर्भगा विधवा ध्रुवम्" इति च।

स यादृच्छिकदृष्टार्थस्नानविषयः। अत एव हेमाद्रौ वचनम्—

"भोगाय क्रियते यत्तु स्नानं यादृच्छिकं नरैः।
तन्निषिद्धं दशम्यादौ नित्यनैमित्तिके न तु" ॥ इति ॥

अत्र च संध्यारात्र्यादावपि योगे गङ्गास्नानं कर्त्तव्यमेव।

रात्रौ स्नाननिषेधस्य—

"दिवा रात्रौ च संध्यायां गङ्गायां च प्रसङ्गतः।
स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृततज्जलैः" ॥

इति ब्रह्माण्डपुराणे,

"सर्व एव शुभः कालः सर्वो देशस्तथा शुभः।
सर्वो जनस्तथा पात्रं स्नानादौ जाह्नवीजले" ॥

इति भविष्यपुराणे च सामान्यत एव प्रतिप्रसवात्। प्रसङ्गतश्चेत्यन्वयः। योऽपि महानिशायां स्नानादिनिषेधः, सोप्यत्र न प्रवर्त्तते।

"महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम्।
तत्र स्नानं न कर्त्तव्यं काम्यनैमित्तिकादृते" ॥

इति देवलवचनात्।

अत्र च वारुण्यादिशब्दैरेव तत्तन्मासतिथ्यादिसंग्रहेऽपि मासादिशब्दैर्वारुण्यादियोगसंग्रहेऽप्यधिकरणत्वेन मासादीनां तत्तच्छब्दैर्निमित्तत्वेन च तत्तद्योगस्य वारुण्यादिशब्दैरुल्लेखः स्नानादिसंकल्पवाक्येऽवश्यं कर्त्तव्यः।

"मासपक्षतिथीनां च निमित्तानां च सर्वशः।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत्" ॥ इतिवचनात्।

योगविशेषस्य वारुण्यादिसंज्ञाकरणस्य संकल्पाद्युपयोगित्वेनैव सार्थक्याच्च। एवं दशहरायां दशयोगेषु केषांचित्किञ्चिद्योगाविनाभावादेव लाभसंभवेऽपि तेन तेन रूपेण सर्वेषां निमित्तत्वात्सर्वेषां तेन तेन रूपेणोल्लेखः कर्त्तव्यः।

## * अथ शिवरात्रिनिर्णयः *

तस्याश्च स्वरूपं शिवरहस्येऽभिहितम् ।

"तत्प्रभृत्यथ देवर्षे माघकृष्णचतुर्दशी ।
शिवरात्रिः समाख्याता प्रियेयं त्रिपुरद्विषः" इति ॥

तेन रात्रिशब्दस्य तिथिपरत्वाद्योगेन शिवव्रतयोग्यतिथिलाभाद्रूढ्या च तद्विशेषलाभात्तत्र योगरूढोऽयं शिवरात्रिशब्दः ।

यस्तु क्वचिद्व्रतेऽपि केवलशिवरात्रिशब्दप्रयोगः । स लक्षणया । नवरात्रादिशब्दवत् । अत एव प्राचुर्येण शिवरात्रिव्रतशब्द एव व्रते प्रयुज्यते । तिथिविशेषसंज्ञाकरणप्रयोजनं च तेन शब्देन तां निर्दिश्य तत्रोपवासपूजादिविधानं "शिवरात्रिमुपोषयेत्" "शिवरात्रिं च पूजाजागरणैर्नये" दित्यादि । खण्डत्वे पूर्वविद्धादिग्राह्यत्वनियमविधानं च "जयन्ती शिवरात्रिश्चे" त्यादिशिवरात्रिव्रतं चोपवासपूजाजागरणात्मकप्रधानसमुदायरूपम् ।

"उपवासप्रभावेन बलादपि च जागरात् ।
शिवरात्रेस्तथा तस्यां लिङ्गस्यापि प्रपूजया ॥
अक्षयान् लभते भोगाञ्छिवसायुज्यमाप्नुयात्" ।

इतिनागरखण्डीयेऽधिकारविधौ,

"स्वयं च लिङ्गमभ्यर्च्य सोपवासः सजागरः ।
अजानन्नपि निःपापो निषादो गणतां गतः" ॥

इति सह्यखण्डीये तदुन्नायके परकृत्यर्थवादे च त्रयाणामपि श्रवणात् । एवं सति यत्र केवलोपवासादिश्रवणं तत्रेतरदप्युपलक्षितं द्रष्टव्यम् ।

क्वचित्त्वशक्तं प्रत्यनुकल्पत्वेनैकैकस्य द्वयोर्वा श्रवणम् ।

"अथवा शिवरात्रिं च पूजाजागरणैर्नयेत् ।
कश्चित्पुण्यविशेषेण व्रतहीनोऽपि यः पुमान् ॥
जागरं कुरुते तत्र स रुद्रसमतां व्रजेत्" ।

इत्यादिष्वथवादिशब्दश्रवणात् ।

जन्माष्टमीव्रतवच्चेदमपि व्रतं नित्यं काम्यं च । वीप्सादियुक्तवाक्यात्फलश्रवणाच्च । तद्वदेव च चतुर्दश्या रात्रिमात्रसत्त्वेऽपि त्रयोदशीवेधो भवत्येव । न तु तिथ्यन्तरवद्दिवाप्रवेशस्यावश्यकता । अत्रापि रात्रावेव पूजादिविधानात् ।

"निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः ।
अतस्तस्यां चतुर्दश्यां सत्यां तत्पूजनं भवेत्" ॥ इति ॥

तत्र निशीथादूर्ध्वमप्यनुवर्त्तमानया त्रयोदश्या युक्ता चतुर्दशी निशीथायोगिन्यपि परैवोपोष्या ।

"माघासिते भूतदिनं हि राजन्
उपैति योगं यदि पञ्चदश्या ॥
जयाप्रयुक्तां न तु जातु कुर्यात्
शिवस्य रात्रिं प्रियकृच्छिवस्य" ॥

इति हेमाद्रिमाधवाद्युदाहृतपुराणवचनात् ।

दिनरात्र्युभययोगलाभाद्रात्रियोगस्यापि भूयसो लाभाच्च । जयया त्रयोदश्या प्रकर्षेण युक्तामित्यभिधानात्पूर्वेद्युस्त्रयोदश्या भूयोरात्रिव्याप्तिप्रतीतेः । इतरथा पूर्वेद्युरेव निशीथयोगिनी, दिनद्वयेऽपि तादृशी, पूर्वैव ग्राह्या ।

"कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एता पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥

जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च।
पूर्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणम्॥
श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या।
पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनम्॥
जयन्ती शिवरात्रिश्च कार्यें भद्राजयान्विते।
माघफाल्गुनयोर्मध्ये या स्याच्छिवचतुर्दशी॥
अनङ्गेन समायुक्ता कर्त्तव्या सा सदा तिथिः"।

इत्यादिस्कन्दपुराणादिवचनेभ्यः।

तत्र सूर्यास्तमारभ्य सत्त्वे—

"आदित्यास्तमये काले अस्ति चेद्या चतुर्दशी।
तद्रात्रिः शिवरात्रिः स्यात्सा भवेदुत्तमोत्तमा॥
त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः।
जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी॥
प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत्"॥

इत्यादीनि कामिकशिवरहस्यादिवचनान्यप्युपोद्बलकानि। 'रात्रौ जागरणं यस्मा' दितिहेतुवशात्प्रदोषशब्दोऽपि रात्रिमात्रपरः। प्रदोषासत्त्वेऽपि रात्रिव्याप्तिमात्रभूयस्त्वे—

"माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वर।
अहं यास्यामि भूपृष्ठे रात्रौ नैव दिवा कलौ॥
लिङ्गेषु च समस्तेषु चरेषु स्थावरेषु च।
संक्रमिष्याम्यसंदिग्धं वर्षपापविशुद्धये॥
तस्माद्रात्रौ हि मे पूजां यः करिष्यति मानवः।
मन्त्रैरेतैः सुरश्रेष्ठ विपाप्मा स भविष्यति॥

निशि भ्रमन्ति भूतानि" इत्यादीनि नागरखण्डादिवचनान्युपोद्बलकानि।

अत्र दिनद्वये निशीथयोगे परेद्युः प्रदोषनिशीथोभयव्याप्तिलाभात् ।

"संकल्पकालमारभ्य सत्त्वादहोरात्रोभययोगाच्च परैवोपोष्या" इति माधवः । तिथितत्त्वेऽप्येवमेव । तत्रैतावती पूर्वविद्धाग्रहणे उपपत्तिः ।

"अर्द्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत् ।
पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रियैः" ॥

इति पद्मपुराणवचनमीदृश एव विषये पूर्वाविधानार्थम् । अन्ततः सर्वाण्यपि पूर्वविद्धाविधायकानि प्रागुक्तानि ।

"महतामपि पापानां दृष्टा वै निष्कृतिः पुरा ।
न दृष्टा कुर्वतां पुंसां कुहूयुक्तां तिथिं त्विमाम्" ॥

इति स्कन्दपुराणीयामावास्यायुक्तानिषेधश्चैतादृश एव विषये सार्थकः । पूर्वस्या एव निशीथव्याप्तौ पूर्वाग्रहणस्य—

"माघकृष्णचतुर्दश्यामादिदेवो महानिशि ।
शिवलिङ्गतयोद्भूतः कोटिसूर्यसमप्रभः ॥
तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः ।
अर्द्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी ॥
तत्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती ।
अर्द्धरात्रयुता यत्र माघकृष्णचतुर्दशी ॥
शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेत् ।
पूर्वेद्युरपरेद्युर्वा महानिशि चतुर्दशी ॥
व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद् व्रतं नरः" ।

इत्यादिनारदीयेशानसंहितादिवचनैरेवोत्तरस्या एव तद्व्याप्तावुत्तराग्रहणस्यैव सिद्धत्वात् ।

न च तत्र निशीथव्याप्तिवचनैः पूर्वस्या इव प्रदोषव्याप्तिवचनैरुत्तरस्या अपि प्राप्तौ पूर्वानियमार्थत्वेन तद्विधयोऽर्थवन्त एवेति वाच्यम्। "रात्रौ जागरणं यस्मा" दितिहेतुनिर्देशवशात्समस्तरात्रिव्याप्तेर्वा विवक्षयैव तत्र प्रदोषव्याप्त्यभिधानात्। निशीथरात्र्योरिव प्रदोषस्य लिङ्गप्रादुर्भावपूजाकालत्वयोरभावात्तत्स्वरूपस्याविवक्षितत्वात्। महानिशापि "महानिशा द्वे घटिके रात्रेर्मध्यमयामयो" रिति देवलोक्तेरर्द्धरात्ररूपैव।

किंच, "अर्द्धरात्रात्पुरस्ता" दितिवचने "पूर्वविद्धैव" इत्युत्तरविद्धानिवर्त्तकादेवकारादुत्तरविद्धायाः प्रसक्तिर्गम्यते। सा चोभयत्र निशीथयोग एव संभवति। न तु पूर्वत्रैव तस्मिन्। एवं निषेधवशादपि।

यदापि "पूर्वविद्धैव" इत्येवकारः "आग्नेय्येव मनोता कार्या" इतिवत् न तु न कार्येत्येवमर्थकः। तदापि पूर्वस्या अकर्त्तव्यत्वप्रसक्तिरप्युभयत्र निशीथयोग एव। उत्तरस्या दिनरात्रियोगादिबहुगुणलाभादिति स एव तस्य विषयः।

किंच सर्वत्रापि पूर्वोत्तरविद्धानियमः कालव्याप्तिशास्त्रानिर्णयविषय एवेत्युक्तम्। तेनात्र दिनद्वये निशीथायोगे "माघासिते" इति वचनेनोत्तरस्या विधानात्परिशेषादुभयदिननिशीथयोगविषयतैव पूर्वविद्धानियमविधेर्युक्तेति।

यच्च प्रतिमासकृष्णचतुर्दशीषु—

"आदौ मार्गशिरे मासि दीपोत्सवदिनेऽपि वा।
गृह्णीयान्माघमासे वा द्वादशैवमुपोषयेत्"॥

इत्यादिस्कन्दपुराणादिवचनैः पूजोपवासजागरणात्मकमेव काम्यशिवरात्रिव्रतं विहितम्। तस्यापि प्रतियामं पूजाया जागरणस्य

च विधानात्सकलरात्रिसाध्यत्वाद्बहुरात्रिव्यापिन्यामनुष्ठानमुचितमिति तत्राप्ययमेव निर्णयः पर्यवस्यति।

रात्रिव्याप्तिसाम्ये तु—

"रुद्रव्रतेषु सर्वेषु कर्त्तव्या संमुखी तिथिः।
अन्येषु व्रतकल्पेषु यथोद्दिष्टामुपावसेत्" ॥

इति ब्रह्मवैवर्त्तवचनात्पूर्वस्यामनुष्ठानम्। येषां मते प्रदोष-व्याप्तिरपि निर्णायिका, तेषामुत्तरस्यामिति।

अस्याश्च रविभौमान्यतरवारयोगे शिवयोगयोगे च प्रशस्ततरत्वं प्रशस्ततमत्वं च स्कन्दपुराणे दर्शितम्—

"माघकृष्णचतुर्दश्यां रविवारो यदा भवेत्।
भौमो वाथ भवेद्देवि कर्त्तव्यं व्रतमुत्तमम्।
शिवयोगस्य योगे च तद्भवेदुत्तमोत्तमम्" ॥ इति ॥

तथा—

"त्रयोदशी कलाप्येका मध्ये चैव चतुर्दशी।
अन्ते चैव सिनीवाली त्रिस्पृश्यां शिवमर्चयेत्" ॥

इति वचनात्त्रिस्पृशापि प्रशस्ता।

पारणं चैतद्व्रतसम्बन्धि स्कन्दपुराणे एव तिथ्यन्ते तिथिमध्ये च विहितम्।

"कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत्" ॥ इति ॥
"उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणम्।
कृतैः सुकृतलक्षैश्च लभ्यते वाथवा न वा ॥
ब्रह्मा स्वयं चतुर्वक्त्रैः पञ्चवक्त्रैस्तथा ह्यहम्।
शिक्ये शिक्ये फलं तस्य वक्तुं शक्तो न पार्वति ॥

ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै।
संस्थितानि भवन्तीह भूतायां पारणे कृते" ॥ इति च ॥

तत्र—

"सा त्वस्तमयपर्यन्तव्यापिनी चेत्परेऽहनि।
दिवैव पारणं कुर्यात्पारणान्नैव दोषभाक्" ॥

इति शिवरात्रिप्रकरणपठितकालादर्शादिलिखितवचनात् "अन्यतिथ्यागमो रात्रा" वित्यादिपूर्वलिखितसामान्यवचनाच्च तिथ्यन्तं प्रतीक्ष्य दिवा पारणस्य कर्त्तुं शक्यत्वे तिथ्यन्ते, नो चेत्तिथिमध्य एवेति व्यवस्था।

माधवेन तु "यामत्रयोर्द्ध्वगामिन्याम्" इतिवचनानुसाराद्व्यवस्थोक्ता। सा मूलादर्शनान्नादृते" त्युक्तम्।

## अथ शिवरात्रिव्रतपद्धतिः।

शिवरात्रिव्रतानुष्ठानप्रकारश्च यद्यपि पुराणभेदेन नानाविधोऽस्ति। तथापि शिवरहस्यादिसम्वादी संक्षिप्तस्तावत्प्रदर्श्यते।

"विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ॥
तस्मान्मृदापि कर्त्तव्यं ललाटे च त्रिपुण्ड्रकम्"

इति लिङ्गपुराणाद्धृतत्रिपुण्ड्ररुद्राक्षो जन्माष्टमीव्रतवत्कालोल्लेखपर्यन्तं विधाय शिवप्रीतिकामः—

"शिवरात्रिव्रतं ह्येतत्करिष्येऽहं महाफलम्।
निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते ॥

चतुर्दश्यां निराहारो भूत्वा शम्भो परेऽहनि ।
भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर" ॥

इति पठित्वा जलमुत्सृजेत् । ततो नित्यकृत्यं विधाय रात्रौ प्रथमप्रहरे अद्य शिवपूजां करिष्य इति संकल्प्य पूर्वप्रतिष्ठित एव लिङ्गेऽप्रतिष्ठिते वा पूर्ववत्तदानीमेव प्राणप्रतिष्ठां विधाय पार्थिवलिङ्ग-पूजाप्रकारेण भूतशुद्ध्यादिपूर्वकं पञ्चाक्षरादिमूलमन्त्रेण वैदिकमन्त्रेण पौराणमन्त्रैः प्रणवादिचतुर्थीनमोऽन्तशिवनाम्ना वा आवाहनादिपूर्वो-क्तोपचारैः पूजयेत् ।

तत्रविशेषः—ॐ ह्रौं ईशानाय नम इति प्रथमप्रहरे दुग्धेन स्नपनम् ।

"शिवरात्रिव्रतं देव पूजाजपपरायणः ।
करोमि विधिवद्दत्तं गृहाणार्घ्यं महेश्वर" ॥

इत्यर्घ्यदानं च । ततस्तन्मन्त्रजपेन तत्कथाश्रवणादिभिर्वा जागरणम् ।

"तद्ध्यानं तज्जपः स्नानं तत्कथाश्रवणादिकम् ।
उपवासकृतां ह्येते गुणाः प्रोक्ता मनीषिभिः" ॥

इति सामान्यवचनात् ।

द्वितीयप्रहरे—ॐ ह्रौं अघोराय नम इति दध्ना स्नपनम् ।

"नमः शिवाय शान्ताय सर्वपापहराय च ।
शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमया सह" ॥

इति चार्घ्यदानम् ।

तृतीये—ॐ ह्रौं वामदेवाय नम इति घृतेन स्नपनम् ।

"दुःखदारिद्र्यशोकेन दग्धोऽहं पार्वतीपते ।
शिवरात्रौ ददाम्यर्घ्यमुमाकान्त गृहाण मे" ॥

इत्यर्घ्यदानम्।

चतुर्थे—ॐ सद्योजाताय नम इति मधुना स्नपनम्।

"मया कृतान्यनेकानि पापानि हर शङ्कर।
शिवरात्रौ ददाम्यर्घ्यमुमाकान्त गृहाण मे॥

इत्यर्घ्यदानम्।

एवं मूलमन्त्रजपादिना रात्रिमतिवाह्य प्रभाते—

"अविघ्नेन व्रतं देव त्वत्प्रसादात्समापितम्।
क्षमस्व जगतां नाथ त्रैलोक्याधिपते हर॥
यन्मयाद्य कृतं पुण्यं तद्रुद्रस्य निवेदितम्।
त्वत्प्रसादान्महादेव व्रतमद्य समर्पितम्॥
प्रसन्नो भव मे श्रीमन् सद्गतिः प्रतिपाद्यताम्।
त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः"॥

इति व्रतं समर्पयेत्।

परदिने यथाशक्ति ब्राह्मणान् भोजयित्वा—

"संसारक्लेशदग्धस्य व्रतेनानेन शङ्कर।
प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव"॥

इति प्रार्थ्य बन्धुभिः सह पारणं कुर्यादिति।

एतस्योद्यापनं प्रतिमासशिवरात्रिव्रतप्रकारस्तदुद्यापनविधिश्च व्रतकाण्डेषु द्रष्टव्यः।

यदा तु—

"आयुष्मान्बलवान् श्रीमान् पुत्रवान्धनवान्सुखी।
वरमिष्टं लभेल्लिङ्गं पार्थिवं यः समर्चयेत्॥

तस्मात्तु पार्थिवं लिङ्गं ज्ञेयं सर्वार्थसाधकम् ।
मृद्भस्मगोशकृत्पिण्डं ताम्रकांस्यमयं तथा ॥
कृत्वा लिङ्गं सकृत्पूज्य वसेत्कल्पायुतं दिवि ।
वार्क्षं वित्तप्रदं लिङ्गं स्फाटिकं सर्वकामदम् ॥
नर्मदागिरिजं श्रेष्ठमन्यदपि हि लिङ्गवत् ।
कृत्वा पूजय विप्रेन्द्र लप्स्यसे चेहितं फलम्" ॥

इत्यादिनन्दिभविष्यपुराणादिवचनवशात्पार्थिवलिङ्गे शिवपूजा क्रियते ।

तदा—

"मृदाहरणसंघट्टप्रतिष्ठाह्वानमेव च ।
स्नपनं पूजनं चैव विसर्जनमतः परम् ॥
हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
पशुपतिः शिवश्चैव महादेव इति क्रमात्" ॥

इतिदेवीपुराणवचनान्मृदाहरणादयः सप्त पदार्थाः प्रणवादि-चतुर्थीनमोऽन्तहरादिनामभिः सप्तभिः कर्त्तव्याः ।

अन्ये तूपचाराः—

"गोभूहिरण्यवस्त्रादिबलिपुष्पनिवेदने ।
ज्ञेयो नमः शिवायेति मन्त्रः सर्वार्थसाधकः ॥
सर्वमन्त्राधिकश्चायमोङ्काराद्यः षडक्षरः" ।

इति नन्दिपुराणवचनात् ॐ नमः शिवायेत्यनेन ।

"तल्लिङ्गैः पूजयेन्मन्त्रैः सर्वदेवान्पृथक्पृथक् ।
ध्यात्वा प्रणवपूर्वं तु तन्नाम्ना सुसमाहितः" ॥

इतिवचनाद्वैदिकेनागमिकेन वा मन्त्रेण येन केनचिन्नाम्ना वा ।

तत्रायमनुष्ठाने विशेषः । ॐ हराय नमः इति मृदमाहृत्य कशकीटाद्यपनयनेन शोधितायां तस्यां शुचिजलप्रक्षेपेण ॐ महेश्वराय नम इति संघट्टनं कृत्वा तेन पिण्डेन—

'अक्षादल्पपरिमाणं न लिङ्गं कुत्रचिन्नरः ।
कुर्वीताङ्गुष्ठतो ह्रस्वं न कदाचित्समाचरेत्' ॥

इति वचनादशीतिरक्तिकामितादक्षादधिकपरिमाणमङ्गुष्ठाधिकोच्चत्वं च लिङ्गं कृत्वा ॐ शूलपाणये नमः, शिव इह सुप्रतिष्ठो भवेति प्रतिष्ठाप्य--

"ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ॥
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्" ॥

इति ध्यात्वा, ॐ पिनाकधृषे नमः, शिव इहागच्छेत्यावाहनं कृत्वा, ॐ पशुपतये नम इति शुद्धोदकेन संस्नाप्यान्यांश्च सर्वान्स्नपनपूर्वभाविनस्तदुत्तरभाविनश्च पाद्यार्घ्य वस्त्रगन्धादीनुपचारान् शिवाय नम इति विसर्जनपर्यन्तान्कुर्यात् ।

ततो—

"मूर्त्तयोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः ।
आग्नेय्यन्ताः प्रपूज्यास्तु वेद्यां लिङ्गं शिवं यजेत्" ॥

इति भविष्यपुराणोक्तमष्टमूर्त्तिपूजनं "न प्रचीमग्रतः शम्भो"-रिति रुद्रयामले निषेधाद् 'देवाग्रे स्वस्य चाप्यग्रे प्राची प्रोक्ता गुरुक्रमै'' रित्यागिमिकीं प्राचीमनादृत्य प्राच्यैशान्यादिक्रमेणाग्नेयीपर्यन्तं वामावर्त्तेन कुर्यात् । ॐ शर्वाय क्षितिमूर्त्तये नमः, ॐ भवाय जलमूर्त्तये नमः, ॐ रुद्रायाग्निमूर्त्तये नमः, ॐ उग्राय वायुमूर्त्तये नमः, ॐ भीमायाकाशमूर्त्तये नमः, ॐ पशुपतये

२६

यजमानमूर्त्तये नमः, ॐ महादेवाय सोममूर्त्तये नमः, ॐ ईशानाय सूर्यमूर्त्तये नमः इति। ततस्तोत्रादिना स्तुत्वा नमस्कृत्य ॐ महादेवाय नम इति विसर्जयेदिति।

शिवपूजायां च बिल्वपत्राणि धुत्तूरपुष्पाणि चातिफलदानि।

"धुत्तूरकैस्तु यो लिङ्गं सकृत्पूजयते नरः।
स गोलक्षफलं प्राप्य शिवलोके महीयते॥
बिल्वपत्रैरखण्डैश्च यो लिङ्गं पूजयेत्सकृत्।
सर्वपापविनिर्मुक्तः शिवलोके महीयते॥
सर्वकामप्रदं बिल्वं दारिद्र्यस्य विनाशनम्।
बिल्वपत्रात्परं नास्ति येन तुष्यति शङ्करः॥
शुष्काण्यपि च पत्राणि श्रीवृक्षस्य सदैव हि"।

इत्यादिभविष्यस्कान्दादिवचनात्।

यच्च शिवाय समर्पितं पुष्पनैवेद्यादि तत्प्रसादरूपेण विष्णुनिवेदितवत् स्वयं नोपयोज्यम्। "स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचि" रिति कालिकापुराणे,

"अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम्।
शालग्रामशिलास्पर्शात्सर्वं याति पवित्रताम्"॥

इति परिशिष्टे,

"दत्त्वा नैवेद्यवस्त्रादि नाददीत कदाचन।
त्यक्तं यच्छिवमुद्दिश्य तदादाने न तत्फलम्"॥

इति च भविष्ये निषेधात्,

"निर्माल्यं यो हि मद्भक्त्या शिरसा धारयिष्यति।
अशुचिर्भिन्नमर्यादो नरः पापसमन्वितः॥
नरके पच्यते घोरे तिर्यग्योनौ च संभवेत्।

ब्रह्महापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत् ॥
तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रत" ॥

इति स्कन्दपुराणवचनादशुचिना तन्न ग्राह्यम् ।

किन्तु स्नानादिना शुचिनेति स्मार्त्तः । अपनीतं तन्न ग्राह्यमिति श्रीदत्तः । शिवदीक्षारहितैर्ज्योतिर्लिङ्गातिरिक्तस्य वा न ग्राह्यमिति शैवा इत्यलं प्रसङ्गागतेन ।

त्रयोदश्या त्रियामार्द्धादूर्ध्वमप्यनुवृत्तया ।
युक्ता निशीथायोगेऽपि परा शिवचतुर्दशी ॥
पूर्वेद्युरेव तद्युक्ताहर्द्वयेऽपि तथाविधा ।
भूयो रात्रिजयायोगलाभात्पूर्वैव संमता ॥
दिनद्वयेऽप्यर्द्धरात्रे वर्त्तमाना परा शुभा ।
प्रदोषे च निशीथे च वृत्तेरिति तु माधवः ॥
रविभौमान्यतरयुक्शिवयोगयुता तथा ।
उदितातिप्रशस्तेयं प्रतिमासासिता तु सा ॥
बहुरात्रियुता ग्राह्या साम्ये पूर्वैव संमता ।
यदि प्रतीक्ष्यतिथ्यन्तं दिवा शक्यं तु पारणम् ॥
तदा तिथ्यन्त एव स्यान्न चेत्तन्मध्य एव तत् ।

इति संग्रहः ।

इति श्रीमीमांसकसम्राट्स्थपतिरघुनाथवाजपेययाजिकृतौ शिवरात्रिनिर्णयः ।

## अथैकभक्ततिथिविवेचनम् ।

अथैकभक्तादिषु तिथिनिर्णयः । यद्यपि कर्मकालव्याप्तियुग्मवचनाभ्यां तत्तद्विशेषवचनैश्चोपवासे यो ग्राह्यतिथिनिर्णयः कृतस्तेनैवैकभक्तादिष्वपि स कृतप्राय एव । तथापि तत्तत्कालपरिच्छेदपूर्वकं तत्र तत्र किञ्चिद्विशेषाभिधित्सया स एव योज्यते ।

तत्रैकभुक्तशब्दादेकभक्तशब्देऽपि भक्तशब्देन तत्साध्यभोजनलक्षणात एकं द्वितीयभोजनाभावसहकृतभोजनमेकभक्तव्रतस्वरूपम्। तदपि च नक्तव्यपदेशात्ततो भिन्नं दिवैव। तस्य चाहर्भागविशेषः कालत्वेन धर्मविशेषश्च स्वरूपकथनव्याजेन स्कन्दपुराणेऽभिहितः।

"दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्।
एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि" ॥ इति ॥

"नियमेन" इत्यस्य न पुरुषार्थनियमप्राप्तद्वितीयभोजननिवृत्तिरर्थः। यौगिकैकभुक्तनामधेयादेव तल्लाभात्। व्रतपर्यायस्य नियमशब्दस्य तदनभिधायित्वाच्च। नापि व्रतसामान्याङ्गत्वेन विहिता ब्रह्मचर्यादयः। सामान्यविधिनैव तल्लाभात्।

किन्तु—

"अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः।
द्वात्रिंशत्तु गृहस्थस्य ह्यमात्रं ब्रह्मचारिणः॥
वक्त्रप्रमाणपिण्डश्च ग्रसेदेकैकशः पुनः"।

इति व्यासोक्तनित्यभोजनगोचरतत्तदाश्रमग्राससंख्यामध्ये—

"दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्।
एकभक्तं तु तत्प्रोक्तं न्यूनं ग्रासत्रयेण तु" ॥

इति देवलोक्ता ग्रासत्रयन्यूनता।

देवलवचने त्वगत्या सामान्यनियमानुवादः। अतस्तदिति समाख्यानव्यपदेशप्राप्तां रात्रिभोजननिवृत्तिं हेतुत्वेन परामृश्य सूर्यास्तमयपर्यन्तगौणकालविधिः।

मुख्यकालस्त्वस्य "मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथि" रिति पद्मपुराणवचनात्, "कर्मणो यस्य यः काल" इति सामान्यशास्त्रसंवादिनो मध्याह्नः। सोऽपि न संपूर्णः। किन्तु "दिनार्द्धसमयेऽतीते" इति वचनात्तदुत्तरभागः।

मध्याह्नश्च पूर्वाह्णमध्याह्नपराह्णैस्त्रेधा विभक्तस्य दिनस्य पञ्चमुहूर्त्तात्मको द्वितीयभाग एव ग्राह्यः। पूर्वोत्तरभागद्वयापेक्षया मध्यमस्यैव मध्यशब्दाच्छीघ्रं प्रतीतेः। "पूर्वाह्णमध्याह्नपराह्णसायाह्नैश्चतुर्धाविभक्तस्य तु द्वितीयो भागः प्रातःसङ्गवमध्याह्नापराह्णसायाह्नैः पञ्चधाविभक्तस्य तृतीयभागो वा विलम्बितप्रतीतिक इति स न ग्राह्यः" इति हेमाद्रिः।

तदयुक्तम्। सर्वेष्वेव मध्याह्नसंशब्दनेष्वनेन न्यायेन त्रेधाविभक्तदिनभागस्यैव ग्रहणप्रसङ्गे विधान्तरदिनभागतत्संज्ञाकरणस्यानर्थक्यप्रसङ्गात्। संज्ञाकरणस्य कार्यविनियोगार्थत्वात्। उक्तौ च "पूर्वाह्णो वै देवानां मध्यंदिनो मनुष्याणामपराह्णः पितॄणा" मितिवच्चतुर्द्धापञ्चधाविभागावपि गोभिलपराशराभ्याम्—

"पूर्वाह्णः प्रहरं सार्द्धं मध्याह्नः प्रहरं तथा।
आतृतीयादपराह्णः सायाह्नश्च ततः परम्" ॥ इति,
"लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तगते रवौ।
प्रातस्तु स स्मृतः कालो भागश्चाह्न स पञ्चमः ॥
सङ्गवस्त्रिमुहूर्त्तस्तु मध्याह्नस्तत्समः स्मृतः।
ततस्त्रयो मुहूर्त्तास्तु अपराह्णोऽभिधीयते ॥
पञ्चमो दिनभागो यः स सायाह्न इति स्मृतः।
यद्यदेतेषु विहितं तत्तत्कार्यं विजानता" ॥ इति च।

तेन पञ्चधाविभागे सार्द्धमुहूर्त्तात्मकश्चतुर्द्धाविभागे किञ्चिदून-मुहूर्त्तद्वयात्मकस्त्रेधाविभागे सार्द्धमुहूर्त्तद्वयात्मकः सर्वोऽप्यावर्त्तनो-परि। ततो मध्यह्नोत्तरभाग एकभक्तस्य मुख्यः कालः। तदुत्तरोऽस्त-मयावधिः कालो गौणः।

एवं सति यदान्यतरैव मध्याह्नोत्तरव्यापिनी तदा तस्यामेव तत्कार्यम्। सामान्यविशेषशास्त्राभ्याम्। विशेषशास्त्रे च मध्याह्नशब्द उक्ततदेकदेशपरो ग्रामो दग्ध इतिवत्। दिनद्वयेऽपि तद्व्याप्तौ तदस्पर्शे साम्येन तदेकदेशव्याप्तौ च पूर्वैव मुख्यकालः। सम्बन्धा-विशेषेऽपि गौणकालव्याप्तेराधिक्यात्। मुख्यकालास्पर्शेऽपि चैकभुक्तानुष्ठानं मुख्यकाल एव।

"तिथ्यादिषु भवेद्यावान् ह्रासो वृद्धिः परेऽहनि।
तावान् ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि" ॥

इति हेमाद्र्यादिधृतवचनात्। शास्त्रतस्तत्र तत्तिथिसत्त्वात्। एतदर्थमेव हीदं वचनमुदयास्तमयमात्रसत्त्वेन साकल्यवचनं च। पूर्वेद्युः पूर्वतिथ्यादिषु। स्वकर्मण्युत्तरतिथ्यादिप्रयुक्तकर्मानुष्ठाननि-मित्तम्। ह्रासवृद्धिसाम्यानि च सर्वत्र षष्टिघटिकापेक्षया। न तु पूर्वतिथ्याद्यपेक्षया। त्रिंशच्चतुर्विंशत्यष्टादशद्वादशघटिकादिक्रमेण सूर्योदयोत्तरं तिथीनां सत्त्वे चतुःपञ्चाशद्घटिकाव्यापित्वेन तिथीनां परस्परं साम्येऽप्युत्तरोत्तरह्रासव्यवहारात्।

वृद्धिप्रक्षेपस्तु यत्र नक्तादौ दिनद्वयेऽपि कर्मकालव्याप्तावुत्तरतिथे-र्ग्राह्यत्वम्। तत्र कर्मतिथेः पूर्वदिने कर्मकालासत्त्वसंपादनेन तदुपोद्वलनार्थः।

"तिथेः परस्या घटिकास्तु याः स्यु—
न्यूनास्तथैवाभ्यधिकाश्च तासाम्।

अर्द्धं वियोज्यं च तथा प्रयोज्यं
हासे च वृद्धौ प्रथमे दिने तत्" ॥

इति लौगाक्ष्युक्तो ह्रासवृध्यर्द्धप्रक्षेपस्तूपसंहारादिष्ट्युपयोगिसन्धि-निर्णयार्थः ।

ननु दिनद्वयमध्याह्नव्याप्त्यादिषु युग्मवाक्यात्किमिति निर्णयो न क्रियते । "द्वितीयादिकयुग्मानां पूज्यता नियमादिषु" इति वचना-देकभक्तेऽपि तत्प्रवृत्तेः ।

उच्यते । यथा मध्याह्नादेर्मुख्यकालस्य विधानं तत्कालेऽनुष्ठा-नार्थं संदेहे तत्कालव्याप्त्या निर्णयार्थं च । तथा "अतस्तत्स्याद्दिवैव ही"ति गौणकालविधानमपि । अनुष्ठानमात्रोपयोगिनो गौणकालस्य "स्वकालादुत्तरः कालो गौणः पूर्वस्य कर्मणः" इति सामान्यवचना-देव लाभसंभवात् ।

तेन यत्रांशे विशेषतो गौणकालविधानम् । तत्र गौणकालव्याप्त्यापि मुख्यकालव्याप्त्येव तिथिर्निर्णेतव्या, न तु युग्मवाक्यात् । तेन दिनद्वये मुख्यकालव्याप्तौ युग्मवाक्यान्निर्णयाभिधानं हेमाद्रेरयुक्तम् । केन च विशेषेणात्रैव युग्मवाक्यान्निर्णयकरणम् । अस्पर्शैकदेशसम-व्याप्त्योस्तु गौणकालव्याप्त्या तदिति न जनीमः । वैषम्येण मुख्य-कालैकदेशव्याप्तौ त्वधिकतद्व्यापिनी ग्राह्या ।

यत्त्वन्याङ्गमेकभक्तं न तत्तत्कालव्याप्त्या निर्णीतायां तिथौ कर्त्तव्यम् । किन्तु प्रधाने निर्णीतायाम् । मध्याह्नस्य च प्रधानेन व्याप्तौ गौणकाल एव तत्कर्तव्यम् । अङ्गगुणविरोधे च तादर्थ्यादिति न्यायात् ।

यत्तूपवासप्रतिनिधिभूतं तदुपवासयोग्यतिथौ मध्याह्न एव च कर्त्तव्यम् । प्रतिनिधित्वात्, "तिथिर्यथोपवासे स्यादेकभक्तेऽपि

सा तथे" ति सुमन्तुवचनाच्च। इदं हि वचनं परिशेषादुपवास-प्रतिनिध्येकभक्तविषयमेवेति।

## अथ नक्तव्रततिथिविवेचनम्।

नक्तव्रतस्य तु दिवाभोजनाभावविशिष्टरात्रिभोजनात्मकस्य प्रदोषो मुख्यः कालः। "प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदे"ति वत्सवचनात्।

भोजनरूपत्वं च तस्य भोजनघटितैकभक्तोपवासायाच-तादिभिः प्राजापत्यादिषु भूयसः साहचर्यात्प्रायिकप्रतीतिकम्। न तु शब्दार्थः। योगेन नक्तकालसाध्यत्वमात्रप्रतीतेः। तदंशे रूढिकल्पनायां च प्रमाणाभावात्।

अत एव क्वचित्, "नक्ताशीव" इति स्पष्टमभिधीयते। अतश्च माधवाद्युक्तं नवरात्रव्रतस्य नक्तव्रतत्वं मुख्यं गौणं यौगिकं वेति विकल्पपूर्वकं यत्केनचिद्दूषितं भोजनरूपमेव मुख्यं नक्तव्रतमिति भ्रमेण। तत्प्रायिकप्रतीतिके शक्तिभ्रान्त्या।

प्रदोषश्च सूर्यास्तोत्तरत्रिमुहूर्त्तात्मकः।
"त्रिमुहूर्त्तः प्रदोषः स्याद्भानावस्तं गते सति।
नक्तं तत्र तु कर्त्तव्यमिति शास्त्रविनिश्चयः" ॥

इति व्यासवचनात्। यस्तु द्विगुणच्छायातिक्रमोपलक्षितो दिनान्त्यमुहूर्त्तो—

"यदा तु द्विगुणां छायां कुर्वंस्तपति भास्करः।
तत्र नक्तं विजानीयान्न नक्तं निशि भोजनम्" ॥

इति सौरधर्मादिषु नक्तव्रतकालत्वेनोक्तः। सोऽनुकल्पः—

"मुहूर्त्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः।
नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप" ॥

इति भविष्यत्पुराणे नक्षत्रदर्शनोत्तरप्रदोषभागस्य शिवेनाहं मन्य इति स्वाभिमतत्वेन तस्य च परमतत्वेनाभिधानात्। तद्वाक्यस्यापि चाप्रसक्तनिषेधायोगेन प्रदोषमुपजीव्यैव प्रवृत्तेः।

अन्तिममुहूर्त्तपूर्वभाव्यपि मुहूर्त्तद्वयं गौणतरः कालः।

"प्रदोषव्यापिनी यत्र त्रिमुहूर्त्ता दिवा यदि।
तदा नक्तव्रतं कुर्यात्स्वाध्यायस्य निषेधवत्"॥

इति कूर्मपुराणे तस्यापि नक्तकालत्वेनाभिधानात्। प्रदोषतुल्यत्वेनाभिधानेऽपि च तस्य गौणत्वमेव। पूर्वोक्तयुक्तेः।

मुख्यकालेऽपि त्रिमुहूर्त्तात्मके आद्यमुहूर्त्तद्वयं मुख्यतरम्। "निशा नक्तं तु विज्ञेयं यामार्द्धं प्रथमे सदे" ति स्मृत्यन्तरात्।

एवं नक्षत्रदर्शनानन्तरप्रदोषभागस्य नक्तव्रतकालत्वे स्थिते—

"चत्वारीमानि कर्माणि संध्यायां परिवर्जयेत्।
आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम्"॥

इति निषेधेऽपि संध्या नक्षत्रदर्शनपर्यन्तैव "नक्षत्रदर्शनात्संध्या सायं तत्परतः स्थितम्" इत्यादिवचनोक्ता ग्राह्या। प्रसिद्धोऽपि च सर्वेषां सायंसंध्याशब्दः सूर्यास्तादौ नक्षत्रदर्शनान्ते काले। प्रातःसंध्याशब्दश्च किञ्चिदालक्ष्यतारकादौ सूर्योदयान्ते। संध्योपासनमपि तत्रैव विहितम्।

यस्तु स्कन्दपुराणे—

"उदयात्प्राक्तनी संध्या घटिकात्रयमुच्यते।
सायंसंध्या त्रिघटिका अस्तादुपरि भास्वतः"॥

इति घटिकात्रयात्मकः संध्याकाल उक्तः। स संध्यागर्जितादावनध्यायप्रयोजके ग्राह्यः।

वस्तुतस्तु निषेधे घटिकात्रयात्मकसंध्याग्रहणेऽपि वैधे नक्तभोजने नक्षत्रदर्शनानन्तरं घटिकात्रयमध्येऽपि क्रियमाणे न दोषः। निषेधस्य मैथुनादिसमभिव्याहारेण रागप्राप्तभोजनविषयत्वात्। वैधविषयत्वे विकल्पापत्तेश्च। यदर्थतया हि यद्विधितः प्राप्तं तदर्थतयैव तस्य निषेधो विशेषविषयत्वादिना प्रबलोऽप्युपजीव्येन विधिना तुल्यबल एव सामान्यविषयत्वादिना दुर्बलेनापि।

अत एव पर्वरविवारादिषु रात्रिभोजननिषेधस्यापि रागप्राप्तविषयत्वादिदं नक्तभोजनं तत्रापि रात्रावेव मुख्यकाल एव कार्यमिति हेमाद्रिप्रभृतयः।

माधवस्तु—

"ये त्वादित्यदिने ब्रह्मन्नक्तं कुर्वन्ति मानवाः।
दिनान्ते तेऽपि भुञ्जीरन्निषेधाद्रात्रिभोजने" ॥

इति भविष्यत्पुराणवचनादेतादृशे विषये पूर्वोक्ते गौणकाल एव नक्तव्रतं कार्यमित्याह।

अत्रेदं चिन्त्यम्। नायं वाचनिकोऽर्थः। वचनेऽपि "निषेधात्" इतिहेतूपन्यासात्। निषेधश्च पूर्वोक्तयुक्त्या वैधेनैव प्रवर्त्तते। किं च वैधविषयेऽपि तस्य प्रवृत्तावन्यव्रताङ्गनक्तेऽपि प्रवर्त्तेत। तत्र च तद्द्वारोपस्थिततद्व्रताङ्गत्वस्यैव प्रजापतिव्रतनयपूर्वपक्षस्यापद्येत। तेनेदं वचनं भानुसप्तम्यादिविहितसौरनक्तविषयम्। न तु कदाचिद्रविवारप्राप्तेतरनक्तविषयम्।

तत्र हि—

"त्रिमुहूर्त्तस्पृगेवाह्नि निशि चैतावती तिथिः।
तस्यां सौरं चरेन्नक्तमहन्येव तु भोजनम्" ॥

इति सुमन्तुवचने एवकारेण नक्तस्वभावप्राप्तस्य रात्रिकालत्वस्य निवर्त्तितत्वान्निषेधोक्तिः सालम्बना भवति।

"नरस्य द्विगुणां छायामतिक्रामेद्यदा रविः ।
तदा सौरं चरेन्नक्तं न नक्तं निशि भोजनम्" ॥

इति कूर्मपुराणेऽपि ।

इदं सौरनक्तं निशि भोजनरूपं नेति व्याख्यानात्सौरनक्तस्य रात्रौ निषेधः । नक्तस्य निशाभोजनात्मकत्वादेव सामान्यतो निषेधानुपपत्तेः । अपि च "ये नक्तं कुर्वन्ती" ति वैधप्रवृत्त्यनुवादे नित्यवच्छ्रुतस्यादित्यवारस्य वैधं नित्यमेव विशेषणत्वं प्रतीयते न त्वार्थसमाजसिद्धं कादाचित्कम् ।

तेनेदमपि वचनं सौरनक्तविषयमेवेति तदेव दिनान्त्यमुहूर्त्ते पूजादिकं पूर्वमेव कृत्वा कर्त्तव्यम् । एवं यतिविधवाधिकारिकमपि नक्तं दिवैव भवति ।

"नक्षत्रदर्शनान्नक्तं गृहस्थस्य बुधैः स्मृतम् ।
यतेर्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते" ॥

इति देवलवचनात् ।

"नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः ।
यतिश्च विधवा चैव कुर्यात्तत्सदिवाकरम् ॥
सदिवाकरं तु तत्प्रोक्तमन्तिमे घटिकाद्वये" ।

इति स्मृत्यन्तराच्च । तदेवं गृहस्थनक्ते नक्षत्रदर्शनोत्तरप्रदोषभागस्य मुख्यकालत्वे तत्पूर्वसायाह्नस्य च गौणकालत्वे स्थिते यैकस्मिन्नेव दिने कार्त्स्न्येनैकदेशेन वा मुख्यकालं व्याप्नोति सैव ग्राह्या ।

दिनद्वयेऽपि प्रदोषव्यापिन्युत्तरैव । गौणमुख्योभयकालव्यापित्वात् "प्रदोषव्यापिनी" त्यादिकूर्मपुराणात् ।

"यदि स्यादुभयोस्तिथ्योः प्रदोषव्यापिनी तिथिः ।
तदोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः" ॥

इति जाबालिवचनाच्च ।

दिनद्वयेऽपि प्रदोषास्पर्शिनी परा ग्राह्या । सायाह्न एव च तत्र भोजनं कार्यम् । गौणकालव्यापित्वात् ।

"प्रदोषव्यापिनी न स्याद् दिवा नक्तं विधीयते ।
आत्मनो द्विगुणा छाया मन्दीभवति भास्करे ॥
तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम् ।
एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भुजिक्रियाम् ॥
कुर्यान्नक्तव्रती नक्तफलं भवति निश्चितम्" ।

इति स्कन्दपुराणाच्च ।

दिनद्वयेऽपि साम्येन वैषम्येण वा तदेकदेशस्पर्शिन्यप्युत्तरैव । गौणकालव्याप्तेरधिकत्वात् । अनेनैव न्यायेन सौरनक्ते यतिनक्ते च दिनद्वये सायाह्नव्यापिनी तदस्पर्शिनी तदेकदेशस्पर्शिनी च पूर्वेद्युरेव तद्व्यापिनी च पूर्वा, परेद्युरेव तद्व्यापिनी केवलं परेति ज्ञेयम् । तत्र सायाह्नस्य मुख्यकालत्वात्प्रदोषस्य च गौणत्वात् । अन्याङ्गे उपवास-प्रतिनिधौ च तादृशैकभक्तन्याय एव ।

अयं च प्रदोषव्याप्त्या नक्तव्रतनिर्णयो न केवलं भोजनरूपे एव तस्मिन् । अन्यत्रापि प्रदोषसाध्ये पूजादिरूपे द्रष्टव्यः । न्यायाविशेषात् । अत एव त्रयोदशीप्रदोषव्रतेऽपि योजितः । नवरात्रव्रतनिर्णयो-ऽप्येतदनुसारेणैव करिष्यते ।

अथ यदा तिथिद्वयप्रयुक्तमेकभक्तनक्तादिकं खण्डतिथिनिर्णय-वशादेकत्र दिने प्राप्नोति तदा पूर्वप्रारब्धयोर्द्वयोः पूर्वतिथिप्रयुक्त-मनुपसंजातविरोधित्वान्मुख्यकल्पेन कार्यम् । इतरत्त्वनुकल्पेन ।

तत्रोत्तरतिथेरुत्तरदिने गौणकालव्यापिन्याः सत्त्वे तेनैव कर्त्रा तत्प्रयुक्तं व्रतमुत्तरदिने कर्त्तव्यम् । कालस्यात्यन्तबाधाभावे कर्त्रनुरोधस्यापि न्याय्यत्वात् । असत्त्वे तस्मिन्नेव दिने कर्त्रन्तरेण तत्कारणीयम् । अनुपादेयकालानुरोधेनोपादेयकर्तृप्रतिनिध्युपादानस्योचितत्वात् । अयमेव न्यायोऽनेकतिथिव्यापिपूर्वप्रारब्धव्रतान्तःपातिनि तद्विरोध्येकतिथिव्रतेऽपि ।

नियमाश्च केचिद्विशेषिका नक्तभोजिनो व्यासेनोक्ताः—

"हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।
अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत्" ॥ इति ॥

स्नानं कर्माङ्गं प्रधानकालं पूजादेः पूर्वम् । आहारे लाघवमल्पत्वम् । कियदित्यपेक्षायां "न्यूनं ग्रासत्रयेण तु" इत्येकभक्तवदत्र वचनाभावात्प्राजापत्यप्रकरणगता ग्राससंख्या नक्तभोजनविषया साम्यादत्रापि ग्राह्या । सा च पराशरापस्तम्बाभ्यां चतुर्विंशतिमते चान्यथान्यथोक्ता ।

"सायं तु द्वादशग्रासाः प्रातः पञ्चदश स्मृताः ।
चतुर्विंशतिरायाच्याः परे निरशनास्त्रयः" ॥ इति ॥
"सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृता ।
चतुर्विंशतिरायाच्याः परे निरशनास्त्रयः" ॥ इति ॥
"प्रातस्तु द्वादशग्रासा नक्तं पञ्चदशैव तु ।
अयाचिते तु द्वौ चाष्टौ प्राजापत्यो विधिः स्मृतः" ॥ इति च ॥

अत एवायाचितव्रतेऽपि "अयाचिताशी मितभुक्" इतिवचनादपेक्षिता प्राजापत्यीयतद्गतैव ग्राससंख्या । अग्निकार्यं "होमं च तत्र कुर्वीत" इत्यादिभिर्धान्यव्रतादौ विहितं होमरूपम् ।

# अथायाचितव्रतविवेचनम् ।

अयाचितं व्रतं चोपवासवदहोरात्रसाध्यत्वात्तदुभययोगिन्यां तिथौ कर्त्तव्यम् । "दिवा रात्रिव्रतं यच्च" इत्यादिस्कन्दपुराणवचनात् ।

यदा तत्तिथिरेकस्मिन् दिने दिवैवान्यस्मिन् रात्रावेव तदाहर्व्यापिन्यां कर्त्तव्यम् । 'अहःसु तिथयः पुण्याः" इत्यादिजाबालिवचनात् । त्रिसंध्यव्यापित्वाच्च । एवं सति संभावितपक्षान्तरेष्वप्युपवासवदेव तत्तिथिर्निर्णेतव्या । अयाचितान्नभोजनं तु यदैव तल्लाभस्तदैव दिने रात्रौ वाऽनिषिद्धकाले सकृदेव कर्त्तव्यम् । अलाभे तूपवासेऽपि न व्रतक्षतिः ।

नन्वयाचितव्रतमथापरं "त्र्यहं न कंचन याचेत" इति व्यस्तनञ्श्रवणेऽपि व्रतशब्दवत्त्वेन निषेधरूपत्वासंभवात्, "नेक्षेतोद्यन्तमादित्यम्" इत्यादिवत्संकल्पलक्षणया याचितमदनीयं "न भोक्ष्ये" इत्येवंविधसंकल्परूपं यथा प्रतीयते, तथा "त्र्यहमद्यादयाचितम्" "अयाचिताशी मितभुक्" इत्यादिषु समस्तनञ्श्रवणाद्व्रतविहितणिनिप्रत्ययश्रवणाच्च याचितभिन्नमद्यादेवेत्येवं साधनविशेषविशिष्टादनधात्वर्थनियमरूपवाक्यार्थप्रतीतेर्याचितभिन्नमदनीयं भोक्ष्य एवेत्येवं संकल्परूपमपि । अत एव माधवेनोभयरूपमपि तदङ्गीकृतम् । अनन्तभट्टेन तु द्वितीयसंकल्परूपमेव । तथा च कथमुपवासेऽयाचितसिद्धिः ।

अत्रोच्यते । समस्तनञ्श्रवणेष्वपि लाघवात्प्राप्ते भोजने याचितभिन्नरूपसाधनविशेषनियम एव विधेस्तात्पर्यम् । न त्वशनरूपधात्वर्थनियमेऽपि । गौरवात् । 'ऋतौ भार्यामुपेयात्' इत्यत्र तु वीप्सायुक्तस्यर्तोर्निमित्तत्वेनाविधेयत्वात्केवलधात्वर्थनियमात्र गौरवम् । न च सर्वत्राख्यातसंबन्ध इति न्यायेन "सायं जुहोति"

स्यादिवत्कालत्वेनैव गमनानुवादेन ऋतुस्तत्र विधातुं शक्यः। तथा सति परिसंख्यापत्तेः। न ह्येकस्यां गमनव्यक्तौ ऋतोः पाक्षिकी प्राप्तिर्येन नियमः संभवेत्। तेनानृतुगमनव्यक्तिव्यावृत्त्यर्थत्वात्परिसंख्यैव स्यात्।

इह त्वेकस्यां भोजनव्यक्तावयाचितान्नस्य प्राङ्मुखत्वस्येव सर्वदाऽप्राप्तेः संभवति नियमः। स च निषेधगोचरसंकल्पयोगक्षेम एव।

केचित् "असूर्यं पश्याः" इतिवदसामर्थ्यसंगतस्यापि नञः क्रियासंबन्धाश्रयणेन निषेधवाक्यसमानार्थत्वमेव "त्र्यहमयाचितम्" इत्यादीनामिच्छन्ति। यस्त्वशनानुवादे साधनविशेषनियमस्य त्र्यहादेश्च विधानाद्वाक्यभेदप्रसङ्गः, "अयाचिताशी" इत्यत्र चैकपदे प्रसरभेदप्रसङ्गः, स आर्थिकानुवादाभ्युपगमात्पौरुषेयस्मृत्यादिवचनेषु च बहुशो दर्शनात्सुपरिहरः।

न चैवं सति नक्तैकभक्तविध्योरपि दिवारात्रिभोजननिवृत्त्योरेव तात्पर्यं स्यात्। तथा च तत्राप्युपवासे व्रतसिद्धिः स्यादिति वाच्यम्। निवृत्तिमात्रे तात्पर्ये व्रतत्वनिर्वाहार्थं संकल्पलक्षणाप्रसङ्गात्, निवृत्तिविशिष्टश्रुतभोजननियमविधानाभ्युपगमेनैव तन्निर्वाहस्योचितत्वात्, चान्द्रायणादिविधिष्वप्यनेनैव न्यायेन चन्द्रगत्यनुवर्तनाद्यन्यथानुपपत्त्याऽनेकगुणोपादानाच्च भोजनविधिरेव। न च निवृत्तेरपि व्रतत्वमस्त्विति वाच्यम्। "नियमो व्रतमस्त्री तच्चोपवासादिपुण्यकम्" इति कोशाद्व्रतशब्दस्यानुष्ठेयभाववाचित्वावगमात्।

पुण्यशब्दो हि धर्मसुकृतादिपर्यायः पुरुषार्थसाधनादृष्टहेतुक्रियायां तदावेशेन तादृशे द्रव्यादौ वा वेदवादिनां प्रसिद्धः।

तथा (१) चोक्तमाचार्यैः—

"श्रेयो हि पुरुषप्रीतिः, सा द्रव्यगुणकर्मभिः ।
चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता" इति ।

केषांचित्तादृशेऽदृष्टे वा । न च भावनावाक्यार्थवादिनां निवृत्ते-स्तादृशादृष्टहेतुत्वे प्रमाणमस्ति । तस्याः कालान्तरभाविफलाभावा-त्स्वरूपेणैव च सत्त्वात् ।

कार्यवाक्यार्थवादिभिः कामाधिकारक्लृप्तशक्तिवशान्निषेधेषु निवृत्तेरप्यदृष्टं यद्यप्यभ्युपगम्यते, तथापि न तत्पुरुषार्थहेतुरिति न तत्तद्धेतुर्वा निवृत्तिः पुण्यशब्दवाच्या । अत एव निषेधेभ्यो निवृत्तो न धार्मिक इत्युच्यते किंत्वधार्मिको न भवतीत्येव । तेन विध्येक-तत्त्ववादे यद्यपि निवृत्तिरपि विधिविषयो भवति । तथापि न तस्या धर्मत्वम् । तादृशादृष्टहेतुत्वाभावात् । अत एव प्रजापतिव्रतनये "नेक्षेतोद्यन्तमादित्यम्" इत्यादिस्नातकव्रतप्रकरणाधीतनिषेधेषु पर्यु-दासलक्षणया संकल्पविधित्वं सिद्धान्तितम् । निवृत्तेरपि व्रतत्वे प्रधानाख्यातार्थान्वयेन नञः श्रुत्या निषेधत्वमेव स्यादिति वैदिकपद-वाक्यार्थानभिज्ञानां निवृत्तेरपि व्रतत्वाभिधानं प्रलाप एव ।

चतुर्थषष्ठाष्टमकालिकत्वादिविधिषु तु चतुर्थकालिकादिश-ब्दानां मत्वर्थीयठन्प्रत्यान्तानां "चतुर्थकालाहारः" इत्यादिवचनान्त-रैकवाक्यतया भोजनगोचरचतुर्थादिकालसम्बन्धपरत्वावगमाद्भवन्ति चैकपदान्यप्यवधारणानि । यथा "अब्भक्षो वायुभक्षः" इति न्यायाच्च त्र्यादिकालगतभोजननिवृत्तेश्चतुर्थादिकालगतनक्तैकभक्ता-दिनियमस्य चोभयस्य प्रतीतावपि निवृत्तावेव विधेस्तात्पर्यम् । न तु भोजननियमेऽपि । गौरवप्रसङ्गात्कालांशे परिसंख्यात्वेन भोजनांशे

(१)—कुमारिलभट्टैर्मीमांसाश्लोकवार्त्तिके ( २ सूत्रे १९१ श्लोके ) उक्तमित्यर्थः ।

नियमत्वेनैकपदे भिन्नप्रसरतापत्तेश्च । व्रतत्वनिर्वाहस्तु "चतुर्थकालाहारो ब्राह्मणान् भोजयेत्" इत्यादिविशेष्यादिभूतब्राह्मणभोजनादिनैव । तेन मासादिव्यापिनि चतुर्थकालिकत्वादिव्रतेऽनुष्ठीयमाने एकादश्याद्युपवासदिने भोजनप्राप्तावपि तदकरणेऽपि तद्व्रतक्षतेरभावादुपवास एव कर्त्तव्य इति ।

तेनायमेकभक्तादिषु संग्रहः ।

मध्याह्नस्य द्वितीयेऽर्द्धे एकभक्तव्रतं भवेत् ।
तेन तद्व्यापिनी या स्यात्सैकभक्तव्रते तिथिः ॥
दिनद्वयेऽपि तद्व्याप्त्यावस्पर्शे साम्य एव वा ।
पूर्वा वैषम्यपक्षे तु याधिका सैव गृह्यताम् ॥
सत्तिथिक्षयनिक्षेपात्पूर्वस्यां भोजनं भवेत् ।
अस्पर्शेऽपि स्वसमये गौणस्त्वस्तावधिस्ततः ॥
त्रिमुहूर्त्तं प्रदोषः स्याद्रवावस्तं गते सति ।
नक्षत्रदर्शनादूर्ध्वं तत्र नक्तव्रतं भवेत् ॥
तत्पूर्वभावी सायाह्नो गौणस्तत्समयः स्मृतः ।
यैव कृत्स्नेऽल्पके वापि मुख्ये तत्समये भवेत् ॥
सैव तत्रेष्यते शेषपक्षेषु तु परा भवेत् ।
सायाह्न एव भोक्तव्यं मुख्यास्पर्शे च तत्र तु ॥
एवं नक्तव्रते सौरे विध्वाद्यतिनोस्तथा ।
परेद्युरेव सायह्नव्यापिनी परतो भवेत् ॥
शेषपक्षेषु पूर्वैव नायं नक्तैकभक्तयोः ।
अन्याङ्गयोश्चोपवासप्रतिनिध्योश्च निर्णयः ॥

नक्तव्रतेऽयाचितरूपेऽप्येष एव विनिर्णयः।
अयाचितं त्वह्नि रात्रावह्नि वा या तिथिर्भवेत्॥
तत्र कार्यं तथा चोपवासवत्तत्र निर्णयः।
यदैवायाचितं लब्धं तदैवात्र भुजिर्भवेत्॥
अलाभेतूपवासेऽपि न व्रतक्षतिरिष्यते।

इति श्रीसम्राट्स्थपतिरघुनाथवाजपेययाजिकृता—
वेकभक्तादिनिर्णयः।

## अथोपाकर्मतिथिविवेचनम्।

अथोपाकर्मनिर्णयः।

इदं चोपाकर्म "उपाकृत्याधीयीत" इत्यध्ययनसमभिव्याहाराद्ब्रह्मचारिप्रकरणाधीतस्य चाधीतैर्ब्रह्मचर्यस्य ग्रहणाध्ययनार्थत्वेन तन्मात्रपरत्वाद्ग्रहणाध्ययनाङ्गत्वात्तदधिकारिणां ब्रह्मचारिणां भवत्येव। तन्मात्राङ्गत्वेऽपि च व्रतस्नातकानामनुवृत्तग्रहणाध्ययनानां गृहस्थानामपि भवति। दर्शितं च गृहस्थानामपि ग्रहणाध्ययनमाश्वलायनेन "समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जायोपेयेत्येके प्राजापत्यं तत्" इति, व्रतमात्रानुष्ठानेन स्नानं वदद्भिरन्यैश्च।

वस्तुतस्तु न केवलग्रहणाध्ययनार्थमुपाकर्म धारणाध्ययनार्थमपि। "अध्येष्यमाणोऽध्याप्यैरन्वारब्ध" इत्यत्राध्याप्यसमभिव्याहाराद्ध्यापकपरेऽध्येष्यमाणपदे धारणाध्ययनरूपत्वाणि, तं विनाप्युक्तस्याध्यापनस्य तेनैव रूपेण लब्धोपाकर्मप्रतिशेषित्वप्रतीतेः। उभयोक्तिबलात्तत्समर्थस्याध्याप्यैर्विनाप्युपाकर्मस्वीकाराच्च।

तेन ग्रहणाध्ययनान्निवृत्तानां धारणाध्ययनमात्रं कुर्वतां गृहस्थवनस्थानामपि भवति। अत एव स्पष्टं गोभिलवचनम्—

"उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते ।
धारणाध्ययनाङ्गत्वाद् गृहिणां ब्रह्मचारिणाम्" इति ।

कात्यायनेन तु वेदसाध्यकार्यमात्रार्थतैवोक्ता ।

"प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥
अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः ।
क्रीडमानैरपि सदा तत्तेषां सिद्धिकारणम्" ॥ इति ॥

अत एवाकरणप्रत्यवायश्रवणे जपयज्ञस्यापि ग्रहणम्—

"उत्सर्जनं च वेदानामुपाकरणकर्म च ।
अकृत्वा वेदजप्यस्य फलं नाप्नोति मानवः" ॥ इति ॥

अत एव चोपाकर्मोत्सर्जनयोर्नित्यत्वम् ।

अत्र च स्मृतिवद्गृह्यादिगृह्येष्वपि प्रत्येकमनेके काला उपाकरणस्योक्ताः । तत्र श्रावणभाद्रपदयोस्तावन्न तुल्यवद्विकल्पः । किंतु मुख्यानुकल्पभावेनेति स्पष्टं प्रतीयते ।

आश्वलायनसूत्रे तावत्—"अथातोऽध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य पञ्चम्यां हस्तेन वा" इति श्रावणस्य स्पष्टं विधानं भाद्रपदस्य तु वार्षिकमित्येतदाचक्षत इति समाख्यया सूचनमात्रं तल्लिङ्गम् । अत एव तत्कारिका—

"अवृष्ट्यौषधयस्तस्मिन्मासे तु न भवन्ति चेत् ।
तदा भाद्रपदे मासि श्रवणेन तदिष्यते" इति ॥

अन्यसूत्रेष्वपि प्रायः श्रावणस्यैव स्पष्टं विधानं भाद्रपदस्य तु क्वचित्सूचनमात्रमिति ।

यद्यपि "श्रावण्यां प्रौष्ठपद्यां चाप्युपाकृत्य यथाविधि" ।

"उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते ।
धारणाध्ययनाङ्गत्वाद् गृहिणां ब्रह्मचारिणाम्" इति ।

कात्यायनेन तु वेदसाध्यकार्यमात्रार्थतैवोक्ता ।

"प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥
अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः ।
क्रीडमानैरपि सदा तत्तेषां सिद्धिकारणम्" ॥ इति ॥

अत एवाकरणप्रत्यवायश्रवणे जपयज्ञस्यापि ग्रहणम्—

"उत्सर्जनं च वेदानामुपाकरणकर्म च ॥
अकृत्वा वेदजप्यस्य फलं नाप्नोति मानवः" ॥ इति ॥

अत एव चोपाकर्मोत्सर्जनयोर्नित्यत्वम् ।

अत्र च स्मृतिवद्गृह्यादिसूत्रेष्वपि प्रत्येकमनेके काला उपाकरणस्योक्ताः । तत्र श्रावणभाद्रपदयोस्तावन्न तुल्यबलविकल्पः । किंतु मुख्यानुकल्पभावेनेति स्पष्टं प्रतीयते ।

आश्वलायनसूत्रे तावत्—"अथातोऽध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य पञ्चम्यां हस्तेन वा" इति श्रावणस्य स्पष्टं विधानं भाद्रपदस्य तु वार्षिकमित्येतदाचक्षत इति समाख्यया सूचनमात्रं तल्लिङ्गम् । अत एव तत्कारिका—

"अवृष्ट्यौषधयस्तस्मिन्मासे तु न भवन्ति चेत् ।
तदा भाद्रपदे मासि श्रवणेन तदिष्यते" इति ॥

अन्यसूत्रेष्वपि प्रायः श्रावणस्यैव स्पष्टं विधानं भाद्रपदस्य तु क्वचित्सूचनमात्रमिति ।

यद्यपि "श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि" ।

"अथातः स्वाध्यायोपाकर्म श्रावण्यां प्रौष्ठपद्यां वा" इत्यादिमनुगौतमादिवचनेषु श्रावणभाद्रपदयोस्तुल्यकल्पत्वं प्रतीयते, तथापि सूत्रस्वरसाच्छ्रवणकर्मसमाख्यया च श्रावणमासस्य मुख्यत्वम्। तत्रापि यद्यपि बह्वृचगृह्येषु श्रवणातिरिक्ता अपि याजुषगृह्येषु च पौर्णमास्यतिरिक्ता अपि काला उक्ताः। तथापि बह्वृचानां श्रवणनक्षत्रं यजुर्वेदिनां च मैत्रायणगृह्ये श्रवणविधानात्तद्भिन्नानां पौर्णमास्येव मुख्यस्तत्कालः।

"उपाकर्म प्रकुर्वन्ति क्रमात्सामयजुर्विदः।
ग्रहसंक्रान्त्यदुष्टेषु हस्तश्रवणपर्वसु॥
धनिष्ठाप्रतिपद्युक्ते त्वाष्ट्रऋक्षसमन्विते।
श्रावणं कर्म कुर्वीरनृग्यजुःसामपाठकाः" ॥

इत्यादि वचनेषु तत्तद्वेदिसंबन्धित्वेन तत्तत्कालनिर्देशात्।

यत्तु केनचित्प्रथमनिर्दिष्टत्वादृग्वेदिनां श्रवणो यजुर्वेदिनां श्रावणी मुख्यः काल इत्युक्तम्। तदेकैकस्य पदस्यानुष्ठानहेतुज्ञानजनकत्वाभावेनैकवाक्यगतपदक्रमस्य क्रमप्रमाणत्वासंभवादवर्जनीयमात्रत्वात्कात्यायनेन श्रवणस्य, बोधायनेन चाषाढ्या अपि प्रथमनिर्दिष्टत्वेनाव्यवस्थितत्वाच्चायुक्तम्।

तेन श्रावणश्रवणस्य ग्रहसंक्रान्तिदुष्टत्वे तत्र सूतकादिसंभावनायां वा तन्मासशुक्लपञ्चम्यां केवलायां हस्तयुक्तायां वा बह्वृचैरुपाकर्म कार्यम्। "बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते" इत्युक्तत्वात्तद्गृह्ये तादृशपञ्चम्या अपि निर्देशाच्च। अवृष्ट्यादिना तु श्रावणश्रवणासंभवे भाद्रशुक्लगतयोः श्रवणतादृशपञ्चम्योः। वार्षिकसमाख्याकरणस्य तत्प्राप्तिफलकत्वात्।

एवं श्रावणश्रवणस्य गुरुशुक्रास्तवार्द्धकाद्याक्रान्तत्वे तत्र प्रथमोपाकर्मनिषेधात्तत्रापि यथासंभवं श्रावणपञ्चम्यां भाद्रश्रवणपञ्चम्योर्वा तत्कार्यम् ।

निषेधश्च कश्यपेनोक्तः—

"गुरुशुक्रतिरोधाने वर्जयेच्छ्रुतिचोदितान् ।
इत्याह भगवानत्रिः श्रावणं तु विशेषतः" ॥ इति ॥

अयं च निषेधः प्रारम्भानुपादानेऽपि तद्विषय एव ।

"यज्ञोपवीतं कर्त्तव्यं श्रावणे गुरुशुक्रयोः ।
मौढ्येऽपि वार्द्धके बाल्ये नित्यवत्कर्म चोदितम्" ॥

इति स्मृतिसारसमुच्चये तदनुष्ठानस्यापि तत्रोक्तत्वात् । यज्ञोपवीतधारणेनोपाकर्मोपलक्ष्यते । तत्र नवयज्ञोपवीतधारणविधानात् ।

तथा च गालवः—

"कृत्वा यज्ञोपवीतानि नवानि वसुधाधिप ।
हुत्वाग्नौ गुरवे दत्त्वा पितृभ्यो धारयेत्ततः ॥ इति ॥

अत एव स्मृतिसंग्रहे स्पष्टं प्रथमग्रहणम्—

"गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्द्धकेऽपि वा ।
तथाधिमाससंसर्पमलमासादिषु द्विजे ॥
प्रथमोपाकृतिर्न स्यात्कृतकर्मविनाशकृत्" इति ।

अधिमाससंसर्परूपौ मालमासौ । आदिशब्देन सिंहस्थगुरुवक्रातिचारादिग्रहणम् । अत्र प्रथमोपाकृतिनिषेधे यदधिमासादिग्रहणम्, तत्र तत्र द्वितीयादिप्रयोगप्राप्त्यर्थम् । नित्यस्यापि सगतिकस्य तत्र कर्तुमनुचितत्वात् ।

"उपाकर्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः ।
मासवृद्धौ पराः कार्या वर्जयित्वा तु पैतृकम्" ॥

इति ज्योतिःपराशरवचने सर्वप्रयोगसाधारण्येन निषेधाच्च । किंतु तत्र प्रारम्भे प्रत्यवायातिशयज्ञापनार्थम् । प्रसवाहोत्सवशब्देन प्रसवनिमित्ता आपाततस्तद्दिने प्राप्ता जातेष्टिर्गृह्यते वर्द्धापनं वा । न तु जातकर्मादि तस्याधिमास एव कर्त्तव्यत्वोक्तेः ।

वस्तुतस्तु—अधिमासे प्रथमोपाकर्मप्रतिषेधः सामगविषयः । तेषां तद्द्वितीयादिप्रयोगस्य सिंहे रवौ मलमासे तत्रैव कर्त्तव्यत्वात् । "सिंहे रवौ" इत्युक्तेः । अत एव—

"दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।
उपाकर्ममहाषष्ठ्योर्ह्येतदिष्टं वृषादितः" ॥

इत्यृष्यशृङ्गवचनमपि सामगविषयमेव । तदुपाकर्मण्येव । "एतदिष्टं वृषादितः" इति हेतुप्रसिद्धिलाभात् । अन्योपाकर्मणि सौरमासग्रहणे प्रमाणाभावात् । तेन सामगैः प्रथममुपाकर्म सिंहस्थे रवौ मलमासे न कर्त्तव्यम् । अन्यैस्तु श्रावणेऽधिकमासे द्वितीयाद्यपि । "दशहरासु" इति वचनार्थश्च मलमासप्रकरणे निष्कक्ष्यते ।

यजुर्वेदिभिस्तु श्रावण्या असंभवे येषां गृह्ये श्रावणहस्तपञ्चम्यावुक्ते तैस्ते, तयोरप्यसंभवे भाद्रपदपौर्णमासीतद्गतहस्तपञ्चम्यौ वा ग्राह्ये । येषां गृह्ये ते नोक्ते तैर्भाद्रपद्येव ।

"संक्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते ।
तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते" ॥

इति स्मृतिमहार्णवधृतवचनात् ।

"श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान्" ॥

"अथातः स्वाध्यायोपाकरणं श्रावण्यां प्रौष्ठपद्यां वा" इत्यादिमनुवृद्धवसिष्ठादिवचनेषु प्रौष्ठपद्या अपि, "प्रौष्ठपदीं हस्तेनोपाकर्म" इतिगोभिलवचने च प्राप्येत्यध्याहारेणान्यत्र हस्तपञ्चम्योः प्रायेण साहचर्यदर्शनात्, हस्तग्रहणात्पञ्चम्युपलक्षणेन च भाद्रपदहस्तपञ्चम्योरप्युपाकर्मकालत्वोक्तेश्च। स्मृतिमहार्णववचने च वाशब्दा निपातानामनेकार्थत्वात्तदर्थे। तेन हस्तयुक्तायां पञ्चम्यामित्येक एव पक्ष। अत एवाश्वलायनसूत्रगतं हस्तग्रहणं पञ्चमीविशेषणत्वेनैव वृत्तिकृता व्याख्यातम्। यद्वा—

"यदि स्याच्छ्रावणं पर्व ग्रहसंक्रान्तिदूषितम्।
स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु" ॥

इति वचने शुद्धपञ्चम्याः, "प्रौष्ठपदीं हस्तेन" इत्यादिवचने च केवलहस्तस्याप्युपादानाद्धस्तयुक्तायां यस्यां कस्यांचित्तिथौ पञ्चम्यां वा केवलायामपीति विकल्पार्थ एव वाशब्दः। संक्रान्त्यादिग्रहणं च सूतकादिसंभवनाया अप्युपलक्षणम्।

"संक्रान्तौ ग्रहणे वापि सूतके मृतके च वा।
गणस्नानं न कुर्वीत नारदस्य वचो यथा ॥
अथ चेद्दोषसंयुक्ते पर्वणि स्यादुपाक्रिया।
दुःखशोकामयग्रस्ता राष्ट्रं तस्मिन् द्विजातयः" ॥

इति स्मृत्यन्तरवचने सूतकादावपि तन्निषेधात्। "वैतानौपासनाः" इति प्रतिप्रसवनिवृत्त्यर्थश्च पुनः प्रतिषेधः। उपाकर्मणोऽपि गृह्याग्निसाध्यत्वात्।

"संक्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते।
उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः" ॥

हेतूक्तिपूर्वमुपाकर्मणोऽप्युत्कर्षनिषेधकाद्वचनादस्माच्च कर्कसिंहव्यवस्थापकाद्वचनादुपाकर्मविधिगतस्य श्रावणशब्दस्यापि शक्यं सौरपरत्वं वक्तुम्।

न चैवम्—"उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि" इत्यादिवाक्यं निर्विषयं स्यादिति वाच्यम्। सत्यपि चैत्रादीनां वैकल्पिकमीनमेषादिरूपत्वे "तुलामकरमेषेषु प्रातः स्नायी भवेन्नरः" इत्यस्य कार्त्तिकमाघवैशाखशब्दघटितप्रातःस्नानविध्येकवाक्यतया अन्यस्मादपि च भूयसः स्मार्त्तपौराणव्यवहाराच्चैत्रादीनां मीनादिरूपत्वस्यौत्सर्गिकत्वावगमादधिकमासेऽपि कर्कश्रावण एवोपाकर्मप्राप्तौ तत्र सिंहश्रावणविधानार्थत्वेन सार्थक्यात्। यथा मासशब्दस्य चैत्रादिशब्दानां च सौर एव मुख्यत्वं मन्वानानां जीमूतवाहनादीनां मते कन्यास्थे रवौ कर्त्तव्यस्य महालयश्राद्धस्य तत्राधिमासपातेऽपि सौरमानोपजीवित्वात्तत्रैव प्राप्तस्य तत्राकर्तव्यात्वार्थं तुलायां कर्त्तव्यत्वार्थं च तुलाविधानं "यावच्च कन्यातुलयो" इत्यादि तद्वत्। अत्रापि च तैरेवमेव वक्तव्यमित्याद्यधिमासनिर्णये वक्ष्यते। न्यायस्य च मन्थरत्वादौत्सर्गिकत्वरूपन्यायलभ्यकर्कनियमावगमात्पूर्वमेव देशभेदेन व्यवस्थापनं नानुपपन्नम्। न्यायलभ्यसुसदृशनियमात्पूर्वमेव विसदृशपूतिकादिनियमविधानवत्। सर्वं चैतद्धेमाद्रिमतमन्वाख्यातम्।

वस्तुतस्तु सामगेतरविषय एवोपाकर्मणि श्रुतः श्रावणशब्दो मुख्यचान्द्रविषय एव। तत्रैव चोपकर्मकाले कर्कसिंहयोर्द्वयोरपि संभवात्। इतरान्प्रत्येव देशभेदेन तयोर्व्यवस्थोचिता। न तु सामगान्प्रति। तेषां कर्के उपाकर्मणः प्राप्त्यैव "उपाकर्म न कर्त्तव्यं कर्कटस्थे दिवाकरे" इति निषेधाप्रवृत्तेः। कथं तर्हि नर्मदोत्तरभागस्थानामप्यार्यावर्त्तनिवासिशिष्टानां श्रावण एव कर्कटस्थेऽपि रवावुपाकर्मानुष्ठानमृग्यजुर्वेदिनाम्। प्राच्यादिनिबन्धेषु दाक्षिणात्या-

नामपि महानिबन्धेष्वलिखितेऽस्मिन्वचनद्वये नाश्वासादित्यवेहि। तस्मादितरेषामेव यथा तथा वा भवतूपाकर्म। सामगानां तु सिंहार्कहस्त एव न चाधिमासेऽप्युत्कृष्यते। आशौचाशक्त्यादिना च तदतिक्रमे लुप्यत एव। एवं ग्रहसंक्रान्तियुक्तेऽपि। "उपाकर्म प्रकुर्वन्ती"ति प्राग्लिखितवचनात्। ग्रहसंक्रान्तियोगश्च यस्मिन् दिने उपाकर्म तद्दिनार्द्धरात्रात्पूर्वमेवार्केषु काले (हस्तश्रवणपर्वसु न तु चित्राधनिष्ठाप्रतिपत्स्वित्यर्थः) षूपजायमानस्तेषां दूषको न तु तस्मात्परस्तात्।

"अर्द्धरात्रादधस्ताच्चेत्संक्रान्तिर्ग्रहणं तथा।
उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत्" ॥

इति गार्ग्यवचनात्,

"यद्यर्द्धरात्रादर्वाक्तु ग्रहः संक्रम एव वा।
नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेऽपि वा"

इति वचनान्तराच्च।

श्रावण्यादिग्रहणमुपलक्षणम्। यानि तु ग्रहणदिनेतरेषामपि तत्समीपवर्त्तिनां केषांचिद्दिनानां सदोषत्वप्रतिपादकानि वचनानि—

"त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम्।
माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः ॥
द्वादश्यादिस्तृतीयान्तो वेध इन्दुग्रहे स्मृतः।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः ॥
खण्डग्रहे तयोः प्रोक्तमुभयत्र दिनत्रयम्"।
इत्यादीनि, तान्युपाकर्मादिभिन्नविषयाणि।
"नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च।
उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते" ॥

इति वचनात्।

इति वचनान्तरे च वाजसनेयिग्रहणं येषां गृह्ये पञ्चमी श्रुता, तेषां सर्वेषामुपलक्षणम्। या पञ्चम्यामुपाकृतिः कार्यत्वेनोक्ता सा पर्वणो दुष्टत्व इति पञ्चमीपक्षस्य विषयविशेषमात्रविधानार्थत्वाद्वचनस्य। अन्यथा सा च वाजसनेयिभिरेवेत्यपिविधाने वाक्यभेदापत्तेः। अनुक्तपञ्चमीकैस्तु प्रौष्ठपद्यामेवेत्युक्तम्।

बौधायनीयैस्तु श्रावण्यसंभवे वार्षिकसमाख्यां बाधित्वा आषाढ्यामपि कर्त्तव्यम्। "श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य छन्दांस्यधीयीत" इतिबौधायनसूत्रात्। एवमन्यैरपि बह्वृचैर्याजुषैश्च मुख्यकालासंभवे स्वस्वसूत्रोक्ता अन्ये काला अनुकल्पत्वेन ग्राह्याः।

सामगैस्तु सिंहस्थे सूर्ये हस्तनक्षत्रे कार्यम्।
"सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः॥
छन्दोगा मिलिताः कुर्युरुत्सर्गं सर्वछन्दसाम्।
शुक्लपक्षे तु हस्तेन उपकर्मापराह्णिकम्"॥

इति गार्ग्यवचनात्।

एवं च "प्रौष्ठपदीं (१) हस्तेनोपाकरणम्" "तैष्यामुत्सृजन्ति" इतिगोभिलसूत्रमपि सौरप्रौष्ठपदाङ्गीकारेण "क्वचिदपवादविषयेऽपि" इतिन्यायेन छविषयेऽप्यौत्सर्गिकमणं कृत्वा हस्तयुक्तां प्रौष्ठपदमाससम्बन्धिनीं तिथिं प्राप्योपाकरणं कार्यम्, नक्षत्राणश्च सूत्रस्वरसात्पौषी रात्रिः पौषमहरित्युदाहरणाच्च पौर्णमासीमात्रविषयत्वप्रमाणाभावेन सामान्यविषयत्वात्तिष्ययुक्तां तादृशप्रौष्ठपदीमेव प्राप्योत्सर्जनमिति व्याख्येयम्। "उपाकर्मापराह्णे स्यादुत्सर्गः प्रातरेव च" इतिसामान्यवचनमपि छन्दोगविषयमेव। विशेषवचनैकवाक्यत्वात्। अन्येषां

(१)—हस्तेनेत्यत्र "नक्षत्रेण युक्तः कालः" इत्यनेनाण्। "लुबविशेषे" इति तस्य लुप्। "नक्षत्रे च लुपि" इति सप्तम्यर्थे तृतीया। तेन हस्तयुक्ते काल उपाकरणमित्यर्थो लभ्यते।

तु दैवत्वात्पूर्वाह्ण एवोपाकर्म । प्रयोगपारिजाते तु सर्वेषामप्युपाकर्मापराह्णिकमुक्तम् ।

यत्तु केनचित्—

"वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ ।
उपाकर्म न कर्त्तव्यं कर्त्तव्यं सिंहयुक्तके" ॥

इति वचनं देशविशेषे व्यवस्थापयतो—

"नर्मदोत्तरभागे तु कर्त्तव्यं सिंहयुक्तके ।
कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे" ॥

इति बृहस्पतिवचनस्य छन्दोगविषयत्वमभिदधता सामगानां देशविशेषे कर्कस्थे रवावुपाकर्मोक्तम् ।

तदयुक्तम् । बृहस्पतिवचनस्योपाकर्मणि देशविशेषेण सिंहकर्कव्यवस्थापकता तावत्तेनैवोक्ता । व्यवस्था चोभयप्राप्तौ भवति । न चाहत्य सामगानां कर्कप्रापकं वचनं क्वापि ग्रन्थे दृश्यते ।

यदि च श्रावणशब्देन सामगानामुपाकर्मकालविधानं क्वापि स्यात् । स च कथंचित्सौरपरः स्यात् । ततो "मीनमेषयोर्मेषवृषभयोर्वा वसन्तः" इति वचनात्सर्वेषां चैत्रवैशाखादीनां मीनमेषवृषाद्यन्यतररूपत्वेन वैकल्पिकोभयरूपत्वाच्छ्रावणस्यापि कर्कसिंहान्यतररूपस्याव्यवस्थया प्राप्तिः स्यात् । न च तादृशमपि तान्प्रतिविधानमस्ति । प्रत्युतेतरान्प्रत्येव तादृशं विधानमस्ति । सौरपरता च तत्रत्यस्य श्रावणशब्दस्य संभावयितुं शक्यते ।

तथाहि "वृषे रवौ" इतिदशहराया इव युगादीनां सौरोपजीवनेन क्वाप्यभिधानादर्शनेऽपि "एतदिष्टं वृषादितः" इति सिद्धवद्धेतुनिर्देशान्यथानुपपत्त्या युगादिवाक्यगतानां वैशाखादिशब्दानामेव गौणेऽपि सौरे तात्पर्यं गृह्यत इति यथा हेमाद्रिणोक्तं तथा तस्मादेव

हेतूक्तिपूर्वमुपाकर्मणोऽप्युत्कर्षनिषेधकाद्वचनादस्माच्च कर्कसिंहव्य-वस्थापकाद्वचनादुपाकर्मविधिगतस्य श्रावणशब्दस्यापि शक्यं सौरपरत्वं वक्तुम्।

न चैवम्—"उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि" इत्यादिवाक्यं निर्विषयं स्यादिति वाच्यम्। सत्यपि चैत्रादीनां वैकल्पिकमीनमेषादिरूपत्वे "तुलामकरमेषेषु प्रातः स्नायी भवेन्नरः" इत्यस्य कार्त्तिकमाघवैशाखशब्दघटितप्रातःस्नानविध्येकवाक्यतया अन्यस्मादपि च भूयसः स्मार्त्तपौराणव्यवहाराच्चैत्रादीनां मीनादिरूप-त्वस्यौत्सर्गिकत्वावगमादधिकमासेऽपि कर्कश्रावण एवोपाकर्मप्राप्तौ तत्र सिंहश्रावणविधानार्थत्वेन सार्थक्यात्। यथा मासशब्दस्य चैत्रादिशब्दानां च सौर एव मुख्यत्वं मन्वानानां जीमूतवाहनादीनां मते कन्यास्थे रवौ कर्त्तव्यस्य महालयश्राद्धस्य तत्राधिमासपातेऽपि सौरमानोपजीवित्वात्तत्रैव प्राप्तस्य तत्राकर्तव्यात्वार्थं तुलायां कर्त्तव्य-त्वार्थं च तुलाविधानं "यावच्च कन्यातुलयो" इत्यादि तद्वत्। अत्रापि च तैरेवमेव वक्तव्यमित्याद्यधिमासनिर्णये वक्ष्यते। न्यायस्य च मन्थरत्वादौत्सर्गिकत्वरूपन्यायलभ्यकर्कनियमावगमात्पूर्वमेव देशभे-देन व्यवस्थापनं नानुपपन्नम्। न्यायलभ्यसुसदृशानियमात्पूर्वमेव विसदृशपूतिकादिनियमविधानवत्। सर्वं चैतद्धेमाद्रिमतमन्वा-स्थोक्तम्।

वस्तुतस्तु सामगेतरविषय एवोपाकर्मणि श्रुतः श्रावणशब्दो मुख्यचान्द्रविषय एव। तत्रैव चोपकर्मकाले कर्कसिंहयोर्द्वयोरपि संभवात्। इतरान्प्रत्येव देशभेदेन तयोर्व्यवस्थोचिता। न तु सामगान्प्रति। तेषां कर्के उपाकर्मणः प्राप्तेरेव "उपाकर्म न कर्त्तव्यं कर्कटस्थे दिवाकरे" इति निषेधाप्रवृत्तेः। कथं तर्हि नर्मदोत्तर-भागस्थानामप्यार्यावर्त्तनिवासिशिष्टानां श्रावण एव कर्कटस्थेऽपि रवावुपाकर्मानुष्ठानमृग्यजुर्वेदिनाम्। प्राच्यादिनिबन्धेषु दाक्षिणात्या-

नामपि महानिबन्धेष्वलिखितेऽस्मिन्वचनद्वये नाश्वासादित्यवेहि। तस्मादितरेषामेव यथा तथा वा भवतूपाकर्म। सामगानां तु सिंहार्कहस्त एव न चाधिमासेऽप्युत्कृष्यते। आशौचाशक्त्यादिना च तदतिक्रमे लुप्यत एव। एवं ग्रहसंक्रान्तियुक्तेऽपि। "उपाकर्म प्रकुर्वन्ती"ति प्राग्लिखितवचनात्। ग्रहसंक्रान्तियोगश्च यस्मिन् दिने उपाकर्म तद्दिनार्द्धरात्रात्पूर्वमेवार्क्केषु काले (हस्तश्रवणपर्वसु न तु चित्राधनिष्ठाप्रतिपत्स्वित्यर्थः) चूपजायमानस्तेषां दूषको न तु तस्मात्परस्तात्।

"अर्द्धरात्रादधस्ताच्चेत्संक्रान्तिर्ग्रहणं तथा।
उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत्" ॥

इति गार्ग्यवचनात्,

"यद्यर्द्धरात्रादर्वाक्तु ग्रहः संक्रम एव वा।
नोपाकर्म सदा कुर्याच्छ्रावण्यां श्रवणेऽपि वा"

इति वचनान्तराच्च।

श्रावण्यादिग्रहणमुपलक्षणम्। यानि तु ग्रहणदिनेतरेषामपि तत्समीपवर्त्तिनां केषांचिद्दिनानां सदोषत्वप्रतिपादकानि वचनानि—

"त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम्।
माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः ॥
द्वादश्यादिस्तृतीयान्तो वेध इन्दुग्रहे स्मृतः।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः ॥
खण्डग्रहे तयोः प्रोक्तमुभयत्र दिनद्वयम्"।

इत्यादीनि, तान्युपाकर्मादिभिन्नविषयाणि।

"नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च।
उपाकर्मणि चोत्सर्ग ग्रहवेधो न विद्यते" ॥

इति वचनात्।

तेन पर्वणि ग्रहदुष्टेऽपि महावेधान्तःपातिनि श्रवणे उपाकर्म भवत्येवेति। अत्र च सामगानामुत्सर्जनोपाकर्मणोर्यौ पूर्वाह्णापराह्णौ तौ द्वेधाविभक्तदिनभागौ ग्राह्यौ। तद्वाक्ये द्वयोरेव निर्देशात्। येषां तु दैवत्वेनोपाकर्मणि पूर्वाह्णग्रहणं तेषां दैवकर्मसु पञ्चधात्रेधाचतुर्धाद्वेधा-विभागन्यतरविभक्तस्य पूर्वाह्णस्य मुख्यानुकल्पभावेन प्रयोगाल्पत्व-महत्त्वाभ्यां वा व्यस्थितस्य सर्वस्याप्यङ्गत्वादत्रापि तादृशस्य ग्रहणम्। सर्वथापि हस्तश्रवणपर्वणां खण्डत्वे औदयिकानामेवात्र कर्मणि ग्रहणम्।

तथा च परिशिष्टम्—

"धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम्।
श्रावणं कर्म कुर्वीरन्नृग्यजुःसामपाठकाः" ॥ इति ॥

कर्मणो धनिष्ठादियुतत्वं धनिष्ठायुते श्रवणे प्रतिपद्युक्तपौर्णमास्यां चित्रायुते च हस्ते यथाक्रममनुष्ठानात्। श्रवणेऽन्वव्यतिरेकविधया व्यासवचनमपि—

"श्रवणेन तु यत्कर्म उत्तराषाढसंयुतम्।
सम्वत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥
"धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवेत्।
तत्कर्म सफलं विद्यादुपाकरणसंज्ञितम्" ॥ इति ॥

औदयिकानि च पर्वादीनि प्रातःसङ्गवात्मकषण्मुहूर्त्तव्यापीनि ग्राह्याणि।

"श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत्षण्मुहूर्त्तकैः।
विद्धा स्याच्छन्दसां तत्रोपाकर्मोत्सर्जनं भवेत्' ॥

इतिनिगमवचनात्। पर्वग्रहणं हस्तश्रवणयोरप्युपलक्षणम्।

अत एव पृथ्वीचन्द्रोदये—

"श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि ।
तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत्" ॥

इति गार्ग्यवचनं लिखित्वा—

"उदये सङ्गवस्पर्शे श्रुतौ पर्वणि चार्कभे ।
कुर्युर्नभस्युपाकर्म ऋग्यजुःसामगाः क्रमात्" ॥

इति वचनान्तरमपि लिखितम् ।

एवं सति कर्मकालव्याप्तिरपि द्वितीयदिने लभ्यते । सामगानां त्वपराह्णोपाकर्मिणां वचनात्तत्कालव्यापिनमपि पूर्वहस्तं बाधित्वोत्तरदिन एव तदनुष्ठानम् ।

तेन दिनद्वये कर्मकालव्याप्तौ तदस्पर्शे वा औदयिकानां हस्तादीनां ग्राह्यत्वं यत्केनचिदुक्तं तदयुक्तम् । सङ्गवस्पर्शिहस्तग्राह्यत्वविधानानुपपत्तेः । तदा पूर्वदिने कालव्याप्तेरावश्यकत्वात् । यदा च "धनिष्ठे"त्यादिवाक्येन सर्वयाजुषाणां प्रतिपद्युक्ते पर्वण्युपाकर्म विहितं तदा—

"पर्वण्यौदयिके कुर्युः श्रावणीं तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते" ॥

इति बह्वृचगृह्यपरिशिष्टकारिकायां तैत्तिरीयकग्रहणं सर्वयाजुषाणामुपलक्षणमेव । बह्वृचसमभिव्याहारादपि तथा । तुल्यकक्ष्याणामेव हि समभिव्याहारो भवति । न हि भवति क्षत्रियैरिदं कर्त्तव्यं वश्यैरिदं कर्त्तव्यं कठैरिदं कर्त्तव्यमिति । भवति तु ब्राह्मणैरिदं कर्त्तव्यमिति ।

किंच उत्तरार्द्धे ग्रहादिवर्जितत्वौदयिकत्वरूपश्रवणगतविशेषविधानवत्पूर्वार्द्धेऽपि पर्वगततद्विशेषविधानमेव युक्तम् । अपेक्षितत्वात्समभिव्याहाराच्च । न तु यदौदयिके पर्वण्युपाकर्म कुर्युस्तत्तैत्तिरीयका एवेति । पूर्वहेतुविपर्ययाद्विशिष्टानुवादनिबन्धनवाक्यभेदापत्तेश्च ।

उपाकर्ममात्रं हि संनिहितम्। न तु पर्वाप्यसाधारण्येन। येन पर्वणः संनिधिलभ्यत्वाद्यदौदयिके तत्तैत्तिरीयका इत्येव श्रुतवचनव्यक्त्यङ्गीकारेण स परिह्रियेत। विशेषणद्वयविधिनिमित्तस्तु वाक्यभेदः। विशेषणशब्दयोर्यौगिकत्वात्।

वस्तुतश्च विशेष्यान्वयसिद्धिसंभवात् "योऽग्निर्दाता स तण्डुलविशेषाणां देवता" इतिवद्यदेतादृशं पर्व। तत्रोपाकर्म कुर्युरितिविधिसंभवात्सुपरिहरः। तत्र च पर्वणो विशेष्यस्य वचनान्तरैः प्राप्तत्वाद्विशेषणयोरेवार्थाद्विधिर्भवति। तत्प्राप्तिश्च सर्वयाजुषविषयैवेत्युपलक्षणमेव तैत्तिरीयग्रहणं युक्तम्।

केचित्तु बह्वृचकारिकाकारस्य बह्वृचसम्बन्धिधर्मविधानार्थमेव प्रवृत्तत्वात्तद्विषयमुत्तरार्द्धमेव तद्गतं विधायकम्, पूर्वार्द्धं त्वन्यविषयकं यथाप्राप्तानुवादकमिति तैत्तिरीयकग्रहस्योपलक्षणत्वं समर्थयन्ते। अत एव कालिकापुराणे उपाख्यानपुरस्सरं सामान्यत एव चतुर्दशीयुते पर्वण्युपाकर्मनिषेध औदयिकतद्विधेरपोद्बलकः श्रूयते।

"चतुर्दश्यां समुत्पन्नावसुरौ मधुकैटभौ।
वेदान् स्वीकुर्वतः पद्मयोनेस्तौ जह्रतुः श्रुतीः॥
हत्वा तावसुरौ देवः पातालतलवासिनौ।
आहृत्य ताः श्रुतीस्तस्मै ददौ लोकगुरुः स्वयम्॥
अमूल्लब्धश्रुतिर्ब्रह्मा पर्वण्यौदयिके पुनः।
अतो भूतयुते तस्मिन्नोपाकरणमिष्यते॥
आसुरं वर्जयेत्कालं वेदाहरणशङ्कया" ॥ इति॥
"श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्" ॥

इति तु वचनं पुराणोक्तश्रावणीकृत्यविषयम्।

अत एव—

"येन बद्धो बली राजा दानवेन्द्रो महाबलः।
तेन त्वामभिबध्नामि रक्षे मा चल मा चल" ॥

इति मन्त्रेण यत्पुरोधःप्रभृतिभी राजादीनां श्रावणपौर्णमास्यां कर्त्तव्यत्वेन भविष्योत्तरे उक्तं रक्षाबन्धनम्, तत्पूर्वस्यामेव कर्त्तव्यम्।

"ततोऽपराह्णसमये कुर्यात्पोट्टलिकां शुभाम्।
कारयेच्चाक्षतैस्तद्वत्सिद्धार्थैर्हेमचर्चिताम्" ॥

इत्यादितद्विधावपराह्णकालत्वोक्तेश्च।

"यद्यप्युपाकर्मादिकं प्रोक्तमृषीणां चैव तर्पणम्।
कुर्वीत ब्राह्मणैः सार्द्धं वेदानुदिश्य शक्तितः" ॥

इत्यभिधाय "ततः" इत्याद्यभिधानादुपाकर्मोत्तरकालताप्यस्य प्रतीयते। तथापि तस्याः पूर्णतिथावार्थिकत्वेनाविधेयत्वाद्विधेयत्वेऽपि वा कालविरोधेऽनादृत्यत्वादुपाकर्मणः परदिनेऽनुष्ठानेऽप्येतत्पूर्वस्यामेवापराह्णव्यापिन्यां कर्त्तव्यमिति।

एवं यथागृह्यमुपाकर्म कृत्वा "सार्द्धांश्चतुरः पञ्च षड् वा मासानुत्सर्जनकालवशाद्व्यवस्थया स्मृतिसिद्धानध्यायपरिहारेण शुक्लकृष्णपक्षयोः स्वाध्यायमधीयीरन्ननध्यायेष्वङ्गानि। नूतनब्रह्मचारिणस्तु ज्योतिःशास्त्रोक्ते विद्याप्रारम्भकाले प्रारम्भान्तरं कृत्वा। अनध्यायास्तु वक्ष्यन्ते।

## अथोत्सर्जनतिथिविवेचनम्।

अथोत्सर्जनकालनिर्णयः। तत्र मनुः—

"पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि" ॥

पुष्ये पौषे मासि बहिर्ग्रामात्। तत्र यथाश्रावण्यामुपाकर्म कृतं तदा पौषशुक्लप्रतिपद्युत्सर्जनं कार्यम्। यदा प्रौष्ठपद्यां तदा माघतत्तिथौ।

"श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्द्धपञ्चमान्" ॥

इति प्रागुक्तत्वात्। अर्द्धः पञ्चमो येषु तान् सार्द्धांश्चतुर इति यावत्।

अत एव पुष्य इत्यत्रापि शुक्लस्य प्रथमेऽहनीति सम्बन्धनीयम्। उत्सर्जनं च यथापूर्वं पक्षद्वयेऽपि स्वाध्यायस्य। उत्सर्जनोत्तरं शुक्लपक्षेष्वेव वेदाध्ययनविधानात्। तथा च मनुरेव—

"यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः।
विरमेत्पक्षिणीं रात्रिं यद्वाप्येकमहर्निशम्॥
अत उर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्।
वेदाङ्गानि रहस्यं च कृष्णपक्षेषु संपठेत्" ॥ इति ॥

याज्ञवल्क्यस्तु पौषमासगतायां रोहिण्यां कृष्णाष्टम्यां वा तदाह—

"पौषमासस्य रोहिण्यामष्टकायामथापि वा।
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः" ॥ इति ॥

पारस्करोऽप्येवम्।

आश्वलायनगृह्ये तु "मध्यमाष्टकायामेताभ्यो देवताभ्योऽन्नेन हुत्वा" इत्यौपश्लेषिकाधिकरणत्वस्यौत्सर्गिकत्वान्माघकृष्णाष्टमी यद्य-प्युत्सर्जनकालत्वेन प्रतीयते। तथापि "षण्मासानधीयीत" इति तत्रैव प्रागुक्तत्वात्सामीपिकाधारत्वाङ्गीकारेण माघीपरतया तद्भाष्यवृत्तिकारादिभिर्व्याख्यातम्।

अत एव बौधायनेनापि षण्मासाध्ययनमभिप्रेत्य श्रावण्युपाकर्मपक्षे माघ्येवोत्सर्जनकालत्वेनोक्ता। "श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य तैष्यां माघ्यां वोत्सृजेत्" इत्युपाकर्मोत्सर्जनकालयोर्व्यत्ययेन व्यवस्था। एषां च पक्षाणां यथापरिग्रहं व्यवस्था।

सामगानां तु सिंहस्थ एवार्के पुष्यनक्षत्रे। "सिंहे रवौ" इत्यादिप्राग्लिखितवचनात्। यदा तु सिंहस्थे सूर्ये प्रथमतो हस्त एव भवति तत्पूर्वः पुष्यस्तु कर्कस्थे। तदा तत्रैवोत्सर्जनं कृत्वा सिंहार्कहस्ते उपाकर्म कार्यं नूतनब्रह्मचारिव्यतिरिक्तैः सामगैः।

"मासे प्रौष्ठपदे हस्तात्पुष्यः पूर्वो भवेद्यदा।
तदा तु श्रावणे कुर्यादुत्सर्गं छन्दसां द्विजः" ॥

इति कात्यायनवचनात्। प्रौष्ठपदमासे यो हस्तस्तस्मात्पूर्वभाविश्रावणमासगत इति व्याख्येयम्। प्रौष्ठपदश्रावणशब्दौ चात्रत्यौ सिंहकर्करूपसौरमासपरौ। सामगानां सौरमास एवोपाकर्मोत्सर्गविधानात्।

मन्दमतीनां तूपाकर्मदिनेऽप्युत्सर्जनं ततः पूर्वं भवति। तथा च खादिरगृह्यम्—"पुष्ये तूत्सर्जनं कुर्यादुपाकर्माथवा" इति। औदयिकस्य पर्वणः षण्मुहूर्त्तसत्त्वापेक्षाबोधके च "श्रावण्यां प्रौष्ठपद्यां वा" इति वचने उत्सर्गग्रहणादपि तथा।

उत्सर्जनकाला अप्येते "खण्डत्वे औदयिका एव सङ्गवस्पर्शिनो ग्राह्याः। उत्सर्जनस्यापि दैवत्वेन पूर्वाह्णकालत्वात्तथाशिष्टसमाचाराच्चेति।

वनस्थयतिभिन्नानां द्विजानां प्रतिहायनम्।
उपाकार्मोत्सर्जनं च भवेत्पूर्वाह्णकालिकम् ॥

तत्रोपाकर्मौषधीनां प्रादुर्भावे नभःसिते ।
पर्वणि श्रवणे कार्यं ग्रहसंक्रान्त्यदूषिते ॥
अध्वर्युभिर्बह्वृचैश्च कथंचित्तदसंभवे ।
तत्रैव हस्तपञ्चम्यां तयोः केवलयोरपि ॥
तत्राप्यसंभवे भाद्रे पर्वणि श्रवणेऽपि वा ।
तत्पञ्चमीहस्तयोर्वा येषां नोक्ता तु पञ्चमी ॥
तेषां यजुर्वेदविदां पर्वण्येव भवेदिदम् ।
बौधायनानां श्रावण्यां ग्रहसंक्रान्तिसंभवे ॥
आषाढ्यामपि तत्प्रोक्तमथ सामविदां रवौ ।
सिंहस्थे हस्तनक्षत्रे भवेत्तच्चापराह्णिकम् ॥
उत्सर्जनं तु तत्रैव पुष्ये तेषां भवेदथ ।
सिंहस्थेऽर्के प्रथमतो हस्त एव भवेद्यदा ॥
तदा कर्कार्कगे पुष्ये तेषामुत्सर्जनं भवेत् ।
इदं पौषेऽथवा माघे परेषां शुक्लपक्षतौ ॥
पौषेऽष्टकायां रोहिण्यां माघे पर्वणि वा सिते ।
भवेन्मन्दमतीनां तु उपाकर्म दिनेऽपि तत् ॥
तिथिनक्षत्ररूपाश्च कालाः सर्वेऽप्यमी द्विजैः ।
उपाकर्मोत्सर्जनयोर्ग्राह्या औदयिकाः परे ॥
कार्त्स्न्येनावयवशो वा सङ्गवस्पर्शिनो यदि ।
उपाकर्मोत्तरं पक्षद्वयेऽप्यध्ययनं श्रुतेः ॥
भवेदुत्सर्जनं यावच्छुक्लेष्वेव तदुत्तरम् ।
कृष्णपक्षेषु चाङ्गानामनध्यायस्तु वक्ष्यते ॥

इतिसंग्रहः ।

इति श्रीसम्राट्स्थपतिरघुनाथवाजपेययाजिकृतावु—
पाकर्मोत्सर्जनकालनिर्णयः ।

# अथेष्टिविषयः पर्वद्वयनिर्णयः ।

तत्र दर्शपूर्णमासेष्टौ "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावस्यया यजेत" इतिवचनात्कृत्स्नप्रयोगस्य पर्वकालत्वे प्राप्तेऽपि "पूर्वेद्युरग्निं गृह्णाति" "उत्तरमहर्यजति" इत्यादि-श्रुत्यन्तरादन्वाधानाद्यनुष्ठानेनोपक्रममात्रं पर्वणि, इतरसकलाङ्गोपेत-प्रधानानुष्ठानं तु प्रतिपदीति द्व्यहकालत्वम् । अत एव गोभिलेनोक्तं "पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः" इति । उपवासः क्रत्वङ्गभूतयमनियमसंकल्पः ।

एवं च पौर्णमास्यमावास्ययोः प्रयोगैकदेशान्वयेन संकोचः । पौर्णमास्यमावास्याशब्दयोस्तिथिविशेषे रूढत्वात् । "सन्धौ यजेत" इतिश्रुतिस्तु संधेरतिसूक्ष्मत्वेन तत्रैकदेशस्याप्यनुष्ठातुमशक्यत्वात्, "सन्धिमभितो यजेत" इतिश्रुत्यन्तरैकवाक्यत्वाच्च, पर्वप्रतिपत्समुदाय-लक्षणया कृत्स्नप्रयोगकालविधायिकैव ।
अतएव बौधायनेनोक्तम्—

"सूक्ष्मत्वात्सन्धिकालस्य सन्धेर्विषय उच्यते ।
सामीप्यं विषयं प्राहुः पूर्वेणाह्ना परेण च" ॥ इति ॥

एवं च सति पौर्णमास्यमावास्याश्रुतिरपि "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इत्यादौ वृत्तिकारादिभिः सन्धिवाचि-त्वेन व्याख्यानात्पौर्णमास्यमावास्याशब्दनिर्वचनार्थवादेषु प्रदर्शित-योगाच्च पौर्णमास्यमावास्याशब्दयोरपि सम्बन्धिवाचित्वादपराह्णादि-शब्दसमभिव्याहारस्य चाहोरात्रलक्षणाबीजस्यात्राभावात्पूर्वोक्तरीत्या पार्श्वद्वयवर्त्तितिथिद्वयलक्षणया "सन्धौ यजेत" इतिवत्कृत्स्नप्रयोग-कालविधायिकेत्यपि वक्तुं शक्यम् । तथापि न संपूर्णं पर्वान्वाधान-कालः । नापि संपूर्णा प्रतिपद्यागकालः । किन्तु पर्वणोऽन्त्यमन्वाधा-नस्य कालः । पर्वचतुर्थांशसहितं प्रतिपद आद्यमंशत्रयं च यागस्य ।

तथा च लौगाक्षिः—

"त्रीनंशानौपवस्तस्य यागस्य चतुरो विदुः ।
द्वावंशावुत्सृजेदन्त्यौ यागे च व्रतकर्मणि" ॥ इति ॥

प्रतिपत्पर्वसम्बन्धिनावन्त्यौ चतुर्थांशौ यथाक्रमं यागे उपवासे च त्यजेदित्यर्थः । अयं च प्रतिपत्पर्वान्त्यचतुर्थांशभिन्नांस्त्रींश्चतुरश्चेति पर्युदासविधया पूर्वशेष एव । न तु स्वतन्त्रस्त्यागविधिः । "पर्वणो यश्चतुर्थांशः" इत्यादिवाक्यान्तरवशादंशविशेषविषयत्वेन पूर्वस्य कालविधेः प्राक्शक्त्यभावाद्वाक्यभेदापत्तेश्च ।

अन्वाधाने पर्वचतुर्थांशवर्जनं सद्यस्कालव्यतिरिक्तविषयम् । तत्र तत्रैव तदनुष्ठानात् । "अथ यदहरुपवसथो भवति तदहःपूर्वाह्ण एव प्रातराहुतिं हुत्वा" इत्यादिगोभिलादिवचनात्तदपगमप्रतीक्षाऽसंभवात् । यागोऽपि सत्यपि पर्वचतुर्थांशादिकालत्वे सर्वदा प्रातरेव ।

"पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः ।
यागकालः स विज्ञेयः प्रातरुक्तो मानीषिभिः" ॥

इति वचनात्, "अथ पूर्वाह्ण एव प्रातराहुतिं हुत्वा" इत्यादि गोभिलादिवचनात्, "प्रातर्यजध्वम्" इत्यादिश्रुतेश्च ।

प्रातःकालश्च पञ्चधाविभक्तदिनस्याद्यस्त्रिमुहूर्त्तो भागः—

"लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तस्थिते तु वै ।
प्रातः काल इति प्रोक्तो भागश्चाह्नः स पञ्चमः ॥

मुहूर्त्तत्रितये प्रातः" इत्यादिवचनात्, चतुरादिविभागेषु प्रातराख्यविभागाभावाच्च ।

यस्तु चतुर्धाविभागपक्षे सार्द्धप्रहरात्मके आद्यभागे "स एवाध्यर्द्धसंयुक्तः प्रातरित्यभिधीयते" इतीदानीन्तनानां

प्रातःशब्दप्रयोगः । स लक्षणया । अनेकार्थत्वस्यान्याय्यत्वात् । "पूर्वाह्णः प्रहरं सार्द्धम्" इतिगोभिलेन तस्य पूर्वाह्णत्वोक्तेश्च । "ऋग्भिः प्रातर्दिवि देव ईयते" इति त्रिधाविभक्तदिनाद्यभागविषयोऽपि प्रयोगस्तथा ।

एवं च गोभिलीयादौ पूर्वाह्णग्रहणं योगेनैद्दशप्रातःपरमेव । एवं यागान्वाधानकाले स्थिते यदा पौर्णमास्यमावास्ययोस्तदुत्तर-प्रतिपदोश्च सूर्योदयास्तमयस्पर्शित्वं तदा न कोऽपि विचारः । यदापि पञ्चदश्योरेवास्तमयादूर्ध्वं समाप्तिः । प्रतिपदस्तु तस्मात्प्रागेव । तदापि तथा ।

ननु तदा पौर्णमास्यां भवतु यथास्थितमनुष्ठानम् । अमावास्यायां त्वस्तादूर्ध्वं समाप्तायामपि द्वितीयदिने प्रतिपदो दिनान्त्य-मुहूर्त्तत्रयादर्वाक्समाप्तौ तस्य द्वितीयया पूरणेन तत्र चन्द्रदर्शन-संभवात् । तद्वति च दिने यागस्य निषिद्धत्वान्न तत्संभवः ।

अत्र कैश्चित्तदामावास्यादिने प्रातःपर्वतृतीयांशत्वात्तत्पूर्व-दिने च चतुर्दशीसत्त्वाद्यागान्वाधानकालाभावात्कालशास्त्रस्य च बलवत्वात्परिहारः कृतः । सोऽयुक्तः । "यहदः पश्चात्पुरस्तात्सोमो न दद्दशे" इति श्रुतेरपि कालशास्त्रत्वात् ।

"पर्वणोऽशे द्वितीयेऽपि कर्त्तव्येष्टिर्द्विजातिभिः ।
अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात्" ॥

इत्यादिभिः सामान्यविहितकालोपमर्देनैव तदा कालान्तरविधानाच्च । अन्यथापराह्णसन्धावपि तथापत्तेः । इष्टापत्तिपक्षश्च दूषयिष्यते ।

अतोऽन्यथा परिह्रियते । "अपराह्णेऽथवा रात्रौ" इत्यादिरात्रि-सन्धिशास्त्रं निरवकाशम् । अपराह्णसन्धिविषये सावकाशं "त्रिमुहूर्त्ता द्वितीया चेत्" इत्यादि शास्त्रं बाधते ।

न च रात्रिसंधिशास्त्रमपि परेद्युश्चन्द्रदर्शनाभावविषयमिति वाच्यम्। तदा कैमुतिकन्यायेन "आवर्त्तनात्परः सन्धिः" इत्यादिवाक्यैश्चापराह्णसन्धितुल्यानुष्ठानसिद्धे रात्रिग्रहणस्य वैयर्थ्यापातेनैतादृशविषय एव तस्य सार्थकत्वात्। अत एव न पौर्णमासीमात्रविषयत्वमपि अत एव बौधायनेन कात्यायनेन चतुर्दशीदिनेऽपि किञ्चिदमावास्याप्रवेश एव श्राद्धाद्यनुष्ठानमुक्तम्।

"यदा चतुर्दशीयामं तुरीयमनुपूरयेत्।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते" ॥ इति ॥

द्वितीयदिने क्षीयमाणामावास्या यदा चतुर्दश्याश्चतुर्दशीदिनस्य तुरीयं याममनुपूरयेदनुप्रविशेदस्तात्पूर्वं किञ्चिद्भवेत्तदैव स्वल्पामावास्योपेते तद्दिन एव श्राद्धान्वाधानादि भवेदित्यर्थः। क्षीयमाणेति विशेषणात्परदिने दिवासन्धिः प्रतीयते।

कारिकान्तरेऽपि यागदिने सूर्यास्तात्पूर्वं प्रतिपत्सद्भावावश्यकता प्रतीयते।

"इष्टेरलं प्रतिपदादिनाड्यः
सप्ताष्ट वा यत्र भवन्ति तत्स्यात्।
क्षीणासु नाड़ीषु दिनस्य पूर्वः
कल्पोऽथ वृद्धौ च भवेद्द्वितीयः" ॥ इति ॥

दिनस्यान्तिमासु सप्ताष्टनाड़ीषु अमावास्यासम्बन्धित्वेन क्षीणासु सतीषु यत्र तस्मिन्नेव दिने ता नाड्यः प्रतिपदाद्यनाडीभिः पूर्यन्ते। अग्रे च क्षयस्तदा तदेव दिनमिष्टेरलं योग्यम्। परदिने चन्द्रदर्शनादित्येकः कल्पः क्षये। परदिनेऽमावास्यावृद्धौ चन्द्रदर्शनाभावात्तदैवेष्टेरनुष्ठानमिति द्वितीयः कल्प इत्यर्थः। सप्ताष्ट वेति षडधिकनाड़ीग्रहणाच्चान्वाधानदिनेऽप्यमावास्याप्रवेशावश्यकता प्रतीयते। त्रिमुहूर्त्ताधिकक्षयाभावात्।

अत एव "दृश्यमानेऽप्येकदा" इतिगोभिलसूत्रं भाष्यकारेण सन्ध्यासमीपापत्तिभिया अमावास्या न प्रतीक्षणीयेत्येतत्परतया व्याख्यातम्। अन्यथा दिवा अमावास्याऽभावे तत्प्रतीक्षाऽप्रसक्तेः।

कर्मप्रदीपेऽप्युक्तम् "अमावास्यां प्रतीक्षेद्वा तदन्ते वापि निर्वपेत्" इति। तदन्ते चतुर्दश्यन्त्यभागे "अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः" इत्युक्तेऽष्टऽमांस इत्यर्थः।

कण्ठरवेण च गोभिलभाष्ये "यदहस्त्वेव चन्द्रमा न दृश्यते ताममावास्यां कुर्वीत, "गताध्वा भवति" इत्येतत्सूत्रद्वयव्याख्यानावसरे सूर्यास्तात्पूर्वं किञ्चिदमावास्यासत्त्व एव तदान्वाधानाद्यनुष्ठानम्, परदिने चामावास्याक्षयोक्त्या दिवासन्ध्यायेवाग्रे चन्द्रदर्शनभिया सन्धिदिने यागानुष्ठानमुक्तम्।

यानि च बौधायनवचनानि—

"चतुर्दश्यां चतुर्यामे अमा यत्र न दृश्यते।
श्वो भूते प्रतिपद्यत्र भूते कव्यादिका क्रिया॥
चतुर्दशी चतुर्यामा अमावास्या न दृश्यते।
श्वो भूते प्रतिपच्चेत्स्यात्पूर्वां तत्रैव कारयेत्"॥

इत्यादीनि। तानि "द्वितीया त्रिमुहूर्त्ता चेत्" इतिवचनान्तर्यादग्रे चन्द्रदर्शनभिया यत्सन्धिदिने यागानुष्ठानम्, तद्दिवाप्रतिपत्सत्त्व एवेत्यमुमर्थवगमयन्त्येव। अन्वाधानादिने परं दिवादर्शसद्भावानावश्यकताद्योतकानीव भासन्ते। तत्रापि चतुर्दश्याश्चतुर्थे यामे अमा संपूर्णा न दृश्यते, किन्त्ववसाने स्वल्पा चतुर्दशी चतुर्थमपि यामं स्पृशति, न त्वमावास्या तद्व्यापिनी दृश्यते, किन्त्वस्तमयादर्वाक् स्वल्पेत्यादि माधवादिभिर्व्याख्यानात्प्रतीकारः।

यत्तु हेमाद्रिणा—

"चतुर्दशी च संपूर्णा द्वितीया क्षयगामिनी।
चरुरिष्टिरमायां स्याद्भूते कव्यादिका क्रिया"

इति यथाश्रुतवचनबलात्पर्वप्रतिपदोरेवास्तमयात्पूर्वं समाप्तौ द्वितीयाप्रभृतिचात्यन्तापचयेऽस्तमयपर्यन्तायामपि चतुर्दश्यामन्वाधानादि, परदिने च याग इत्युक्तम्, तत्स्वयमेव पूर्वोक्तरीत्या पूर्वव्याख्यातचतुर्दशीचतुर्यामेत्यादिवचनसमानार्थतयैतस्यापि व्याख्यानसंभवाद्द्वितीयादिक्षयोक्तेश्च कदाचिद्द्वितीयाप्रभृतितिथिक्षयेणैवापराह्णिकत्रिमुहूर्त्तद्वितीयाऽभावेऽपि प्रतिपदि चन्द्रदर्शनात् "त्रिमुहूर्त्ता द्वितीया चेत्" इत्येतद्वाक्यगतं त्रिमुहूर्त्तद्वितीयासत्त्वमविवक्षितं। चन्द्रदर्शनमात्रं तु विवक्षितमित्येवंपरत्वादनादृत्यम्।

माधवीयादौ तु "द्वितीया क्षयकारिणी" इति पाठः। तस्माच्चतुर्दश्यमावास्यादिने किञ्चिदमावास्याप्रतिपद्भाव एव। प्रतिपदि चन्द्रदर्शने सन्धिदिने यागानुष्ठानस्य न्याय्यत्वाद्रात्रिसंधौ परदिने चन्द्रदर्शनेऽपि प्रतिपद्येव याग इति निश्चयान्न तत्रापि विचारः।

दिवासंधौ तु विचार्यते। स च त्रेधा। आवर्त्तने तत्पूर्वोत्तरभागयोश्चेति। तत्रावर्त्तने तत्पूर्वे च संधौ तद्दिने यागः पूर्वदिनेऽन्वाधानम्,। तदुत्तरं संधौ परदिने यागः, तद्दिनेऽन्वाधानमिति तावत्पर्वद्वयसाधारण उत्सर्गः।

तथा च लौगाक्षिः—

"पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते॥
अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते।
उपोष्य तस्मिन्नहनि श्वो भूते याग इष्यते"॥ इति॥

अत्र मध्याह्नपूर्वाह्णापराह्णशब्दा योगेनावर्त्तनतत्पूर्वोत्तरभागवचनाः।

"आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः ।
मध्याह्नस्तु तयोः संधिर्यदावर्त्तनमुच्यते" ॥

इत्येतत्प्रकरणपठितवचनात् । अत एव गोभिलः—

"आवर्त्तने यदा संधिः पर्वप्रतिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत्परेऽहनि ॥
पर्वप्रतिपदोः संधिरर्वागावर्त्तनाद्यदि ।
तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः ॥
आवर्त्तनात्परः संधिर्यदि तस्मिन्नुपक्रमः ।
परेद्युरिष्टिरित्येष पर्वद्वयविनिर्णयः" ॥ इति ॥

यदा चावर्त्तनतत्पूर्वसंध्योः पर्वचतुर्थांशे यागानुष्ठानं तदा न यागप्रयोगः पर्वमध्ये समापनीयः, किन्तु प्रतिपदि प्रविष्टायाम् ।

"प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते ।
पुनः प्रणीय कृत्स्नेष्टिः कर्त्तव्या यागवित्तमैः" ॥

इति गार्ग्यवचनेऽन्यथा दोषस्मरणात् ॥

प्रणीय अग्निमित्यर्थः ।

परिशिष्टे तु "पक्षादिचरोरुपक्रमोऽपि पक्षे प्रतिपदं प्रतीक्ष्यैव कर्त्तव्यः" इत्युक्तम् ।

"पक्षादावेव कुर्वीत सदा पक्षादिकं चरुम् ।
पूर्वाह्ण एव कुर्वन्ति विद्धेऽप्यन्ये मनीषिणः" ॥ इति ॥

विद्धे पर्वविद्धे । संधिनिर्णयश्च तिथिसाम्ये यथास्थित्यैव । वृद्धिक्षययोस्तु तत्र विशेषमाह लौगाक्षिः—

"तिथेः परस्या घटिकास्तु याः स्यु—
न्यूनास्तथैवाभ्यधिकाश्च तासाम् ।
अर्द्धं वियोज्यं च तथा प्रयोज्यं
ह्रासे च वृद्धौ प्रथमे दिने तत्" ॥ इति ॥

ततश्च यदा चतुस्त्रिंशन्नाडीरूपपरमदिनसमये पौर्णमासी षोडशघटिका सप्तदशघटिका वा षड्विंशतिघटिकारूपपरमक्षीणदिनसमये च द्वादशघटिका त्रयोदशघटिका वा । एवं विषुवादावप्यूह्यम् । परदिने च प्रतिपत्त्रिमुहूर्त्तवृद्धा तदा यथास्थितसंध्यालोचने आवर्त्तने तत्पूर्वे वा संधेः पर्वचतुर्थांशरूपयागकाललाभाच्च संधिदिने यागः प्राप्नोति । अर्द्धवृद्धिप्रक्षेपेण तु संधिनिर्णये परदिने । तथा यदा परमदिनसमये विंशतिदण्डा वा पौर्णमासी । एवमन्यदाप्यूह्यम् । परदिने च प्रतिपत्त्रिमुहूर्त्तन्यूना तदा पराह्णसंधेः—

"संधिर्यद्यपराह्णे स्याद्यागं प्रातः परेऽहनि ।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति" ॥

इति वचनाच्च प्रतिपच्चतुर्थांशस्यापि केषांचिन्मतेन यागकालत्वात्परदिने यागः प्राप्नोति यथास्थितसंध्यालोचने । अर्द्धक्षयप्रक्षेपेण तु संधिदिन एवेति विशेषः । इह चानया रीत्या संधौ निर्णीयमाने यदा आवर्त्तनतत्पूर्वसंध्योः प्रतिपद्वृद्ध्या अपराह्णसंधिविशेषे तदभावेऽपि दिनद्वयेऽपि प्रातर्यागकाललाभः । यदा वा परमदिनसमये कदाचिदपराह्णसन्धौ तु सर्वदापि अग्रे क्षयेण दिनद्वयेऽप्रातर्यागकालालाभः । तदा पौर्णमास्यां तावद्यागकालशास्त्रस्यौदासीन्यात्संधिविशेषप्रयुक्त एव निर्णयः ।

न चापराह्णसन्धिविशेषे तद्दिने प्रातरन्वाधानकाललाभात्परदिने च "पक्षादयोऽभियष्टव्याः" इति पक्षादिरूपयागकाललाभात्तदनुरोधेनैव निर्णयः संभवतीति वाच्यम् । यथा संधिविशेषेण पर्वनिर्णये

अङ्गगुणविरोधन्यायेन "श्रीनंशानौपवस्तस्य" इत्येतस्य सूर्योदयास्तमयव्यापिपर्वविषयत्वापादनेनाननुग्राह्यत्वादन्वाधानस्य कदाचित्पर्वचतुर्थांशे कदाचिच्च चतुर्दश्यामनुष्ठानम्। तथा आवर्त्तनसमीपापराह्णसंधौ प्रातः किञ्चित्पर्वतृतीयांशरूपान्वाधाकाललाभेऽपि तस्याननुग्राह्यत्वात्। यागकालानुरोधे च निर्णये पक्षादिरूपयागकालानुरोधेन परदिने इव कृत्स्नयागप्रयोगव्यापिकाललाभेन पूर्वदिनेऽपि यागानुष्ठानस्य सुवचत्वात्।

यदा त्वावर्त्तनतत्पूर्वसंध्योः परदिने वृद्ध्यभावेन प्रातः प्रतिपच्चतुर्थांशसत्त्वात्संन्धिदिन एव प्रातः पर्वचतुर्थांशरूपयागकाललाभः। आवर्त्तनविप्रकृष्टापराह्णसंधौ च तद्दिने प्रातः पर्वतृतीयांशसत्त्वात्परदिन एव प्रातः प्रतिपत्तृतीयांशरूपयागकाललाभः। तदा संधिप्रयुक्तनिर्णयस्य कालशास्त्रमप्युपोद्बलकं भवति। संप्रतिपत्तेः।

यदा तु संधिशास्त्रस्य कालशास्त्रस्य च विरोधो भवति। स चावर्त्तनतत्पूर्वसंध्योर्न संभवत्येव। अपराह्णसंधौ त्वावर्त्तनसंनिकृष्टे परदिने च वृद्ध्यभावे पूर्वद्युरेव यागकालस्य प्रातःसत्त्वात्कालशास्त्रेण पूर्वद्युः, संधिशास्त्रेण च परेद्युर्यागप्राप्तेः स भवति। तदा पौर्णमास्यां तावद्यद्यपि संध्युत्तरदिने नियमविधिविषयः कालो न लभ्यते। प्रतिपच्चतुर्थांशश्च प्रत्युत निषिद्धः—

"न यष्टव्यं चतुर्थेंऽशे यागैः प्रतिपदः क्वचित्।
रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी" ॥ इति ॥

अपराह्णसंधिशास्त्रं च वृद्ध्यादिना परदिने यागकाललाभेऽपि सावकाशम्। तथापि—

"सन्धिर्यत्रापराह्णे स्याद्यागं प्रातः परेऽहनि।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति" ॥

इति वृद्धशातातपीयप्रतिप्रसववचनात्संधिशास्त्राच्च परेद्युरेव यागः।

अत्र केचिन्न्यायमप्युपन्यस्यन्ति। तथाहि—

"न यष्टव्यम्" इति न तावदयं पर्युदासः। पर्युदासो हि भवन् "प्रतिपच्चतुर्थांशभिन्नाश्चत्वारोऽशा यागकालः" इत्येवं "यागस्य चतुरो विदु"रित्यादेः शेषभूतः "चतुर्थांशरहितायां प्रतिपदि"इत्येवं "पक्षादयोऽभियष्टव्याः" इत्यादेर्वा शेषभूतो भवेत्। न चोभयथापि संभवति। तस्य शास्त्रद्वयस्य—

"पर्वणो यश्चतुर्थोऽश आद्याः प्रतिपदस्त्रयः।
यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः"॥

इत्यादिवाक्यविहितप्रतिपदाद्यभागत्रयपरत्वेन तस्य च चतुर्थांशभिन्नत्वस्य स्वतः सिद्धत्वेन पर्युदासानर्थक्यात्।

न च "पर्वणो यश्चतुर्थोऽशः" इत्यस्य प्राप्ते कर्मणि पर्वचतुर्थांश-प्रतिपदाद्यभागत्रयप्रातःकालरूपानेकार्थविधायकत्वासंभवात्पर्युदास—सिद्धार्थानुवादकत्वमेव "आद्याः प्रतिपदस्त्रयः" इत्यशंस्य इति वाच्यम्।

"अर्द्धमन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदि"इतिवत्सन्धिपार्श्वद्वयवर्त्तिनः स्थूलकालस्यैकस्योभयलक्षितस्य विधानात्पर्वचतुर्थांशप्रतिपदाद्यभाग-त्रययोः स्वरूपेणाविधेयत्वात्। अन्यथैकवाक्योपादानात्कालद्वयस्य समुच्चये सति "सायं च प्रातश्च जुहोति"इति "यदाग्नेयोऽष्टाकपालोऽ-मावास्यायां च पौर्णमास्यां च"इत्यादिवदश्रुतकर्मावृत्त्यापत्तेः। प्रातःकालस्य च "प्रातर्यजव्यम्" इत्यादि सिद्धस्यानुवादो वा, पौरुषेयवाक्ये वाक्यभेदस्य तथाऽदोषत्वाद्विधिर्वास्तु। अत एव "पञ्चदश्याः परः पादः" इत्यादि यज्ञपार्श्ववचने तदनुपादानम्।

किंच विकल्पभिया तत्र तत्र पर्युदासः स्वीक्रियते इह च पर्युदासत्वेऽपि तस्यापरिहार्यत्वान्न तल्लक्षणा युक्ता। तथाहि—

दिनद्वयेऽपि प्रातर्यागकालालाभे नित्यत्वेन च यागस्यावश्यकर्त्तव्यत्वे सन्धिसंनिकर्षात्पूर्वेद्युः पर्वतृतीयांशस्य "पक्षादयोऽभियष्टव्याः" इतिवचनाद्वोत्तरेद्युः प्रतिपच्चतुर्थांशस्य विकल्पेन गौणकालतया प्राप्तिः केन वार्यते। तस्मात्पर्युदासत्वासंभवात् 'न यष्टव्यम्" इति निषेध एवायं "न तौ पशौ करोति" इतिवत्। तथा च प्रतिपच्चतुर्थांशस्यापि शास्त्रतो यागकालत्वेन प्राप्तेरावश्यकत्वात्तस्याश्चात्यन्तं बाधासंभवाद्व्यवस्थापेक्षायामावर्त्तनतत्पूर्वसन्धिविषयः प्रतिपच्चतुर्थांशनिषेधोऽपराह्णसंधिविषयश्च तदनुपपत्तिकल्पितस्तद्विधिरिति। एतन्न्यायमूलकमेव च पूर्वोक्तं वचनम्। "संधिर्यद्यपराह्णे स्यात्" दित्यादिमण्डनकारिका चेति।

अत्रेदमुच्यते। मध्याह्नादिसंधिविषयः किल "न यष्टव्य"मिति निषेधोऽस्मिन्मतेऽभिमतः। न च तथा संभवति। तदा संधिशास्त्रेण पूर्वदिने यागविधानात्प्रतिपच्चतुर्थांशे यागस्याप्रसक्तेः।

न च तदा विशेषतोऽप्रसक्तावपि "पक्षादयोऽभियष्टव्याः"इत्यादिकृतसामान्यप्रसक्त्या लब्धात्मनो निषेधस्य व्यवस्थामात्रं मध्याह्नादिसंधिविषयत्वेन क्रियत इति वाच्यम्।

पक्षादिशास्त्रस्य त्वया शास्त्रान्तरवशेनाद्यांशत्रयविषयत्वस्वीकारेण पर्वतच्चतुर्थांशाप्रसञ्जकत्वात्। अन्यथा पर्युदासानर्थक्यासंभवात्। वस्तुतः पर्युदासानर्थक्यमसंभवदुक्तिकमेव। "द्वावंशावुत्सृजेदन्त्यौ" इत्यस्यैव "न यष्टव्यम्" इत्यस्य पर्युदासलक्षणया "आद्याः प्रतिपदस्त्रयः" इत्यस्य च श्रुत्या पक्षादिशास्त्रोपसंहारकतया तुल्यफलकत्वेऽपि स्मृत्यन्तरत्वात्। अतएव सर्वनिबन्धेषु संधिपार्श्वपरिमाणनिरूपणावसरे "पर्वणो यश्चतुर्थांशः"इत्यादीनां "न यष्टव्यम्" इत्यस्य च लिखनम्।

किंच पक्षादिशास्त्रकृतसामान्यप्रसक्त्युपजीवकत्वे निषेधस्य व्यर्था तदुपपत्तये विध्यन्तरकल्पना, व्यर्थश्च निषेधत्वाङ्गीकारः।

तथात्वेऽपि "दीक्षितो न ददाति" इत्यादेरिव वार्त्तिककृन्मते सामान्य-विशेषन्यायेन बाधकत्वेन पर्युदासतुल्यत्वाद्विकल्पाप्रसक्तेः। तस्माद्वि-कल्पवादिना विधिकल्पनावादिना च मध्याह्नादिसंधावेव विशेषतः प्रसञ्जको विधिः कल्पनीयः। तथा च तत्रैव प्रतिपच्चतुर्थांशविकल्पः प्रसज्येतेति तद्भिया तत्रैव पर्युदासत्वमावश्यकमेतस्येति यत्किंचिदेतत्।

यत्तु "पर्युदासत्वेऽपि दिनद्वये यागकालालाभे विकल्पस्य दुर्निवारत्वान्निर्बीजा पर्युदासलक्षणा" इत्युक्तम्। तदयुक्तम्। निषेध-मूलकविकल्पभिया हि पर्युदासलक्षणास्वीकारः। तथा चास्मन्मते यत्र प्रतिपच्चतुर्थांशे यागो विहितस्तद्भिन्नविषयं "न यष्टव्यम्" इत्यादि-वचनमिति तस्य निषेधत्वे तत्रैव विषये विशेषतः प्रतिपच्चतुर्थांशयाग-प्राप्तेरपेक्षितत्त्वात्तस्याश्च शास्त्रमन्तरेणासंभवाद्विकल्प आपद्येतेति-तद्भिया पर्युदासलक्षणां ब्रूमः। अस्य विकल्पस्य निषेधमूलकत्वात्। न तु त्वदुक्तविकल्पभिया। तस्य न्यायलभ्यत्वस्य त्वयैवोक्तत्वात्।

वस्तुतस्तु न तत्रापि विकल्पः। किन्तु "संधिर्यद्यपराह्णे स्यात्" इत्यस्य वचनत्वाभावे पर्वतृतीयांशरूपगौणकालाङ्गीकारेण पूर्वेद्युरेव यागानुष्ठानं न्याय्यम्। संधिशास्त्रस्य दिनद्वये यागकाललाभेऽपि सावकाशत्वात्। "न यष्टव्यम्" इत्यनेन पर्युदस्तत्वेन सामान्यप्राप्ति-मुपजीव्य निषिद्धत्वेन वा "प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः" इति न्यायेन प्रतिपच्चतुर्थांशस्य गौणकालत्वेनापि स्वीकारायोगात्। तथा चैतादृशे विषये परेद्युर्यागानुष्ठानसिद्ध्यर्थमपि "संधिर्यद्यपराह्णे स्यात्" इत्यस्य वचनत्वमावश्यकम्।

अत एव हेमाद्रिः—"मण्डनकारिकैवेयं नार्षं वचनमिति पौर्णमा-स्यामप्यपराह्णसंधावपि परेद्युः प्रातः प्रतिपत्तृतीयांशरूपयागकाललाभ एव परेद्युरनुष्ठानम्। नान्यथा। 'न यष्टव्यम्' इति निषेधात्। किन्तु

पर्वतृतीयांशेऽपि । "पर्वणोऽशे तृतीयेऽपि" इत्यादिसाधारणवचनात्" इत्याहु ।

केचित्तु—

"यज्ञकालस्तिथिद्वैधे षट्कलो यदि लभ्यते ।
पर्व तत्रोत्तरं ग्राह्यं हीने पूर्वमुपक्रमेत्" ॥

इत्यपि साधारणं वाक्यं कलाशब्दस्य नाडीवाचितया त्रिमुहूर्त्तात्मकप्रातःकाले यागकालसद्भावावश्यकत्वस्य स्पष्टं प्रतिपादनादत्रार्थे योजितम् । आवर्त्तनतत्पूर्वसंध्योः संधिशास्त्रेणैव दर्शापराह्णसंधौ च "त्रिमुहूर्त्ता द्वितीया चेत्" इत्यादिनैव पूर्वदिनानुष्ठानसिद्धेरेतद्वाक्यानुप्रयोगात् ।

हेमाद्रेस्तु दर्शापराह्णसंधिविषयमिदं वचनमभिमतम् । तेनात्रत्यकलाशब्दस्य "त्रिमुहूर्त्ता द्वितीया चेत्" इतिवचनानुरोधेन मुहूर्त्तपरत्वाभिधानादित्याद्यस्तु ।

तस्मादपराह्णसंधौ सर्वदा पौर्णमास्यां परदिने यागानुष्ठानं यद्यभिमतम् । तदा "संधिर्यद्यपराह्णे स्यात्" इत्यस्यार्षत्वं वचनत्वं चावश्यमभ्युपेयम् । उक्तं च तद्वृद्धशातातपीयत्वोपन्यासेन माधवादिभिर्बहुभिः । "न यष्टव्यम्" इति तु पर्युदासः "आद्याः प्रतिपदस्त्रयः" इत्यादिसमानार्थकः । सामान्यप्राप्त्युपजीवनेन प्रतिषेध एव वा । वार्त्तिककृन्मतेन "दीक्षितो न ददाति" इत्यादिवत् । "न चतुरो वृणीते" इत्यादिवत् "पर्वणो यः" इत्यादिनियमविधिसिद्धार्थिकार्थानुवादो वा । "सद्यस्कालपौर्णमासीविषयोऽयं निषेधः" इति माधवः ।

प्रातर्यागकालसत्त्वे तत्रैव प्राशुभावेन यागः कर्त्तव्यो न त्वालस्यादिना प्रतिपच्चतुर्थांशे इत्येवं परोऽयं निषेधः" इत्यप्याहुः ।

अपरे तु—"अपराह्णसंधिशास्त्रात्पर्वद्वयसाधारण्येन प्राप्तस्य परेद्युर्यागस्य दर्श एव सोमदर्शनप्रयुक्तत्रिमुहूर्त्ताद्वितीयाचेदित्यपवाद-दर्शनात्पौर्णमास्यामपराह्णसंधौ वचनाभावेऽपि परेद्युर्यागसिद्धिः।

"पर्वणोंऽशे तृतीयेऽपि कर्त्तव्येष्टिर्द्विजातिभिः।
द्वितीयासहितं यस्माद् दूषयन्त्याश्वलायनाः" ॥

इत्यपि साधारणं वचनं सोमदर्शनप्रयुक्तदूषणपरतया दर्शपरमेव। एकमूलकल्पनालाघवात्। "यज्ञकालस्तिथिद्वैधे" इति तु "त्रिमुहूर्त्ता द्वितीया चे" दित्येतद्वचनानुरोधेन षण्मुहूर्त्तपरत्वेन हेमाद्रिणैव व्याख्यानाद्दर्शविषयमेव" इत्याहुः।

तदप्ययुक्तम्—यदा पूर्वदिने यागकालाभावेऽपि प्रतिषिद्धत्वेन प्रतिपच्चतुर्थांशस्य गौणत्वायोगात्पूर्वतृतीयांशस्यैव संधिसन्निकृष्टस्य गौणकालत्वाभ्युपगमेन वचनाभावे पूर्वदिने यागानुष्ठानौचित्यमुक्तम्। तदा किमु वक्तव्यम्। पूर्वदिने यागकाललाभे "पर्वणोंऽशे तृतीयेऽपि" इत्यपि च वचनं तदा पूर्वन्यायोपबृंहितं साधारणमेव स्यान्न दर्शमात्रविषयम्। न च तदा दर्शविषयस्य त्रिमुहूर्त्तशास्त्रस्यानर्थ-क्यम्। अपराह्णसंधौ परदिने यागकालाभावे पौर्णमास्यां पूर्वेद्युरनुष्ठानम्। अमावास्यायां तु परदिने यागकाललाभेऽपि सोमदर्शन इत्येवमर्थत्वात्।

यद्यपि केश्चित्—"त्रिमुहूर्त्ता द्वितीया चेत्" इति वचनस्य पञ्चधाविभक्तदिनत्रिमुहूर्त्तात्मकचतुर्थभागरूपापराह्णव्यापिनी द्विती-येति व्याख्यानात्सूर्यास्तात्पूर्वषण्मुहूर्त्तद्वितीयासत्त्वावश्यकत्वलाभे तादृशद्वितीयाविद्धायां प्रतिपदि प्रातःकालव्यापी यागकालो न लभ्यते। तथापि सार्द्धमुहूर्त्तमात्रम्। क्षये तु किञ्चित्तदधिकमपि तत्स्पर्शी स लभ्यत एव।

वस्तुतस्तु "आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः" इति-पर्वनिर्णयप्रकरणाधीतवचनप्रतिपादितद्वेधाविभक्तदिनद्वितीयभागरूपा-पराह्णग्रहणस्यैवात्राप्युचितत्वात् , सूर्यास्तपूर्वत्रिमुहूर्त्तमात्रद्वितीया-सत्त्वेनैव सोमदर्शनोपपत्तेरधिकसत्त्वप्रमाणाभावाच्च, तद्व्याख्या-नस्यायुक्तत्वात्, त्रिमुहूर्त्तद्वितीयासत्त्वस्यैवावश्यकत्वात्, सोम-दर्शनदिने प्रातःकालव्याप्त्यपि यागकालः संभवत्येवेति ।

तस्मात् 'संधिर्यत्रापराह्णे स्यात्" इत्यस्मादार्षवचनादेव पौर्ण-मास्यामपराह्णसंधौ निष्कृष्टे पूर्वदिने प्रातर्यागकाललाभेऽप्युत्तरदिने च तदलाभेऽपि परेद्युर्याग इति माधवादिबहुसंमतपक्षसिद्धिः ।

हेमाद्रेस्त्वस्यार्षवचनत्वासंप्रतिपत्तेः परेद्युः प्रातर्यागकाललाभ एवापराह्णसंधौ पौर्णमास्यां परेद्युर्यागानुष्ठानं नान्यदेति मतं सोपपत्तिकमुक्तमेवेत्यलं बहुना । अमावस्यायामप्यावर्त्तनतत्पूर्वसंध्यो-र्यथोक्त एव निर्णयः । अपराह्णसंधावपि वृद्ध्यादिना द्वितीयदिने चन्द्रदर्शनाभावे पौर्णमासीवदेव ।

यदा तु द्वितीयदिने क्षयादिना सूर्यास्तात्पूर्वं त्रिमुहूर्त्ते तदधिके वा द्वितीयाप्रवेशेन चन्द्रदर्शनसंभवः । तदाऽपराह्णसंधित्वेन परेद्युर्यागे प्राप्तेऽपवादमाहतुर्बौधायनवृद्धशातातपौ—

"त्रिमुहूर्त्ता द्वितीया चेत्प्रतिपद्यापराह्णिकी ।
अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात्" ॥ इति ॥

प्रतिपद्दिने अह्नोऽपरभागे त्रिमुहूर्त्ता ततोऽधिका वा द्वितीया यदि प्रविष्टा भवेत्तदाऽऽपराह्णिककिञ्चिद्दर्शयुक्तायां चतुर्दश्यामेवान्वा-धानादि कृत्वा संधिदिने यागं कुर्यात् । तत्परदिने उक्तविधद्वितीया-युक्तप्रतिपद्दिने चन्द्रदर्शनात् । तत्र च यागस्य निषिद्धत्वादित्यर्थः ।

वृद्धवसिष्ठोऽपि—

"आदित्येऽस्तमिते चन्द्रः प्रक्षीण उदियाद्यदि ।
प्रतिपद्यतिपत्तिः स्यात्पञ्चदश्यां यजेत्तदा" ॥ इति ।

अस्तमिते अस्तमयप्रत्यासन्ने। अतिपत्तिर्यागस्याननुष्ठानम् निषेधश्च—

"अर्वागस्तमयाद्यत्र द्वितीया तु प्रदृश्यते ।
तत्र यागं न कुर्वीत विश्वे देवाः पराङ्मुखाः" ॥ इति ।

चन्द्रदर्शनदिने विश्वे सर्वे देवाः पराङ्मुखा यत इत्यर्थः। द्वितीया त्रिमुहूर्त्तेति द्रष्टव्यम्। वाक्यान्तरात्। अयं च पर्युदासश्चन्द्रदर्शनार्हप्रतिपद्भिन्नायां प्रतिपदीति। सामान्यप्राप्त्युपजीवी निषेधो वा "न यष्टव्यम्"इतिवत्। पर्युदासत्वं श्रुतौ स्पष्टम्। यस्मिन्नहनि पुरस्तात्पश्चात्सोमो न दृश्यते तदहर्यजेतेति। चतुर्दशीमिश्रामावास्यायां पुरस्तात्सोमो दृश्यते द्वितीयामिश्रायां प्रतिपदि पश्चात्। तद्द्वयभिन्नायां मध्यवर्त्तिन्यां प्रतिपन्मिश्रामावास्यायां यजेतेत्यर्थः।

अन्धभास्कराख्ययाज्ञिकग्रन्थोदाहृतायां श्रुतावपि—"यस्मिन्नहनि पुरस्तात्परतश्च सोमो न दृश्यते तत्र ह यजेते"ति। पर्युदाससिद्धस्य च चन्द्रदर्शनवत्यां प्रतिपदीष्ट्यकरणस्य तदा किञ्चिद्दर्शयुक्तायां चतुर्दश्यामन्वाधानविधानेन स्पष्टीकरणं तत्रैव श्रुतौ "प्रतिपदि समुदिता चेदन्वादधीत भूतदिने" इति।

चन्द्रदर्शनवति दिने यागकरणे प्रायश्चित्तं च स्मृतं कात्यायनेन—

"यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते ।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये" ॥ इति ।

अत्र केचित् "चेच्छब्दस्य निमित्तत्वप्रतिपादकस्य दृश्यत इत्याख्यातान्वयेन दर्शनस्य निमित्तत्वप्रतीतेस्तस्य चानिषिद्धत्वान्न तन्निमित्तकमिदं प्रायश्चित्तम् । किन्तु स्वतन्त्रमङ्गम् । तच्चाङ्गिभूतयागाभावे न संभवति । यजनीयत्वोक्तिश्चेति चन्द्रदर्शनवत्यपि दिने यागानुष्ठानद्योतकमेवैतत्"इत्याहुः ।

तत्तुच्छम् । अपेक्षिताकालयागानुष्ठाननिमित्तवैगुण्यप्रतिसमाधानरूपदृष्टार्थत्वे संभवत्यनपेक्षितादृष्टार्थत्वायोगात् । चेच्छब्दोपजनितनिमित्तत्वप्रतीतेश्च । विशेषणे संक्रमादेवं निमित्तवाक्याभिव्यक्तिर्वारुणिसोमदर्शनवदहो यदि यजनीयं यागसंबन्धि स्यान्मोहाच्चेत्तत्र यजेतेति । "हविरार्त्तिमार्च्छे"दित्यस्य हविश्छेदार्त्तिप्राप्तिविशिष्टं स्यादितिवत् । तेन यजयनीयत्वोक्तिरप्युपपन्नेति ।

ननु यथा चन्द्रदर्शनवतो दिनस्य यागे पर्युदासः श्रुतस्तथान्वाधानेऽपि । तस्मात् "यदैवैनं न पुरस्तान्न परस्तात्पश्येत्तर्ह्येवोपवसेत्" इत्यादि । गोभिलादिभिरप्युक्तं "यदहस्त्वेव चन्द्रमा न दृश्येत तामावास्यां कुर्वीत"इत्यादि ।

सत्यं द्वयोरपि चन्द्रदर्शनरहितं दिनं कालः । समावास्यां कुर्वीतेत्यादि । सत्यं द्वयोरपि चन्द्रदर्शनरहितं दिनं कालः । संपूर्णायाममावास्यायां प्रतिपदि च दिनद्वयेऽपि चन्द्रदर्शनाभावादुभयत्राप्यनुगृह्यते ।

यदा त्वेकस्मिन्नेव दिने चन्द्रादर्शनम् । तदोभयोः स्वकालत्वासंभवेऽङ्गगुणविरोधन्यायेन चन्द्रादर्शनदिने यागस्य पूर्वस्मिंश्चन्द्रदर्शनवत्यप्यन्वाधानस्यानुष्ठानं युक्तम् । अत एव श्रुतिरपि "तद्धैके दृष्ट्वोपवसन्तीति" । "उपवसे"दित्यनुवृत्तावापस्तम्बोऽपि "यदहर्न दृश्येत तदहरमावास्याम्" "श्वो न द्रष्टारः" इति चेति । यस्याः श्वः

परेद्युश्चन्द्रं न द्रष्टारस्तस्यां चतुर्दशीमिश्रायां सिनीवालीसंज्ञिकायाममावास्यायामित्यर्थः। तदुक्तमापस्तम्बसूत्रभाष्यार्थसंग्रहकारेण—

"पूर्वाह्णे वाथ मध्याह्ने पर्वसंन्धिर्यदा भवेत्।
तत्रोपोष्या सिनीवाली श्वो न द्रष्टारलक्षणा" ॥ इति ॥

गोभिलोऽप्याह—"दृश्यमानेऽप्येकदेति"। एवं च पितृयज्ञश्राद्धयोरपि तदैवानुष्ठानम्। चन्द्रक्षयवत्पराह्णे हि तयोर्विधिः—"अपराह्णे दाति तस्मिन्क्षीणे ददाती"ति।

"पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते।
वासरस्य तृतीयेंऽशे नातिसंध्यासमीपतः" ॥ इति च।

स च किंचिदहःपर्यन्तवर्त्तिन्यां चतुर्दशीयुक्तामावास्यायामेव संभावयितुं शक्यते न प्रतिपद्युक्तायाम्।

"अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः।
अमावास्याष्टमांशे च पुनः किल भवेदणुः" ॥ इतिवचनात्।

कर्मप्रदीपे तु—

"पक्षान्तं कर्म निर्वर्त्त्य वैश्वदेवं च साग्निकः।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः" ॥

इत्यादिवचनैरन्वाधानपिण्डपितृयज्ञश्राद्धानामेकदिनसाध्यत्वात्पितृयज्ञश्राद्धयोश्चाहत्य चन्द्रक्षये विधानादन्वाधानकालवाक्यगतमपि चन्द्रादर्शनं चन्द्रक्षयोपलक्षणम्" इत्युक्तम्।

"यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः ।
तत्क्षयापेक्षया ज्ञेयं क्षीणे राजनि चेत्यपि ॥ इति ।

"दृश्यमानेऽप्येकदा" इति च सूत्र चतुर्दशीमिश्रामावस्यायां श्राद्धे क्रियमाणे तत्कालापराह्णसंनिकर्षातिविप्रकर्षाभ्याममावास्याप्रतीक्षातदभावप्रतिपादनपरत्वेन व्याख्यातम् ।

"यच्चोक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया ।
अमावास्यां प्रतीक्षेद्वा तदन्ते वापि निर्वपेत्" ॥ इति ।

तुल्यन्यायत्वाच्चैवमन्वाधानेऽपि चतुर्दश्यष्टमांशादिसोमक्षयकालप्रतीक्षातदभावौ द्रष्टव्यौ ।

गोभिलोऽपि चन्द्रपूर्त्तिक्षयनिमित्तकमेव पर्वद्वयनिर्णयमभिप्रेत्य तयोर्दुर्ज्ञानत्वात्तज्ज्ञानोपायमाह—"पृथगेवैतस्य ज्ञानस्याध्यायो भवत्यधीयीत वा तद्विद्भ्यो वा पर्वागमयेत" इति । अध्यायो ग्रन्थो ज्यौतिषशास्त्ररूपः । एतच्चान्वाधानादिद्वयस्यैकदिनसाध्यत्वमाश्वलायनापस्तम्बव्यतिरिक्तविषयम् । तेषां कदाचिद्यागदिनेऽपि पितृयज्ञो भवति । सौत्रस्यामावास्यापदस्य संधिमदहोरात्रपरत्वेन तद्भाष्यकारादिभिर्व्याख्यानात् ।

तस्मात्सत्यप्यन्वाधानस्यापि चन्द्रादर्शनकालत्वे विरोधे तत्र तद्बाधस्य न्याय्यत्वाद्दिवासंधौ चतुर्दश्यां च सूर्यास्तात्पूर्वं किंचिदमावास्यासत्त्वे यागश्चन्द्रदर्शनदिने न कार्य एवेति सिद्धम् । रात्रिसंधौ तु चन्द्रदर्शनदिनेऽपि यागो भवतीति पूर्वमेव सप्रपञ्चमुक्तम् ।

यत्तु शतपथब्राह्मणम्—"यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजन्निमाल्लोकानभ्युदेती"ति । यच्च तैत्तिरीयब्राह्मणम्—(१)"एषा वै सुमना नामेष्टिर्यमभियजमानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोके समृद्धिर्भवति"इति ।

---

(१)—"एषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोकेऽर्द्धुकं भवति" इति मुद्रणाधारपुस्तके पाठः ।

तदपि चन्द्रोदयदिने यागकर्त्तव्यताप्रतिपादकत्वाच्चन्द्रोदयस्य चामावास्याष्टमांशप्रभृतिविद्यमानत्वादुदितमात्रस्य च लोकैरदर्शनान्न चन्द्रादर्शनदिनयागप्रतिपादकश्रुतिस्मृतिविरुद्धम् ।

यद्यपि "स एष आहुतिभ्यो जातः पश्चाद्ददृशे" इति श्रुत्यन्तरम्, तदपि चन्द्रादर्शनदिनयागप्रतिपादकबहुश्रुतिस्मृतिविरोधाच्छास्त्रीय-दर्शनाभिप्रायेण प्रतिपद्याहुतिभ्यो जातः पश्चाद्द्वितीयदिने ददृश इत्येवं व्याख्येयमिति हेमाद्रिः ।

मया तूच्यते—नैताः श्रुतयश्चन्द्रदर्शनदिने यागं स्पष्टतया विदधति । किन्तु केवलं स्तुवन्ति । स्तुत्या तु विधिः कल्प्यः । स च चन्द्रादर्शनदिनयागविधायिप्रत्यक्षविधिविरोधान्न कल्पयितुं शक्यते । स्तुतिमात्रं त्वेवं प्रशस्तमपि चन्द्रदर्शनदिनं चन्द्रादर्शनदि-नापेक्षया हीनमेवेति प्रशस्ततरे तत्रैव यागः कर्त्तव्य इत्येवं चन्द्रा-दर्शनदिनयागविधिशेषतयैव नेतव्यम् । (१) जर्त्तिलगवेधुकस्तुतिरिव पयोविधिशेषतया यद्यपि विधिः कल्प्यते, तथापि रात्रिसंधौ चतुर्दशीदिने दर्शप्रवेशाभावे च चन्द्रदर्शनदिनेऽपि यागानुष्ठानस्य पूर्वोक्तरीत्या न्याय्यत्वात्तद्विषयो भविष्यतीति ।

यदपि "उत्तरामुपवसेदनिर्ज्ञाय" इतिश्रुत्यन्तरं हेमाद्रिणोदा-हृतम् । तदपि प्रतिपदि चन्द्रदर्शनादर्शनसंशयेऽपि पाक्षिकस्यापि दोषस्य परिहार्यत्वात्प्राप्तं पूर्वेद्युरनुष्ठानमपोद्य परेद्युरनुष्ठानं विधत्ताम् ।

यदपि "पूर्वां पौर्णमासीमुपवसेत" इति पैङ्ग्यम्, "उत्तराम्" इति कौषीतकम्, "या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका" इतिभाष्यकारैः पूर्वाह्णपराह्णसंधिभेदेन व्यवस्थापितं पक्षद्वयं

(१)—जर्त्तिला आरण्यास्तिलाः । गवेधुका आरण्या गोधूमाः । अत्र शास्त्रदीपिकायां विशेषो द्रष्टव्यः ( १० । ८ । ४ ) ।

पौर्णमास्यां प्रतिपाद्य "या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूः" इति तादृशमेव तत्पक्षद्वयममावास्यायामप्युक्त्वा पर्वद्वय-साधारणोक्तपक्षद्वयोपसंहारार्थं देशविशेषपठनीयत्वेन भाष्यकारै-रेवोक्तमैतरेयिब्राह्मणम्—"पूर्वां पौर्णमासीमुपवसेदनिर्ज्ञाय पुरस्ताद-मावास्यायां चन्द्रमसं यदुपैति यद्यजते तेनोत्तरामुत्तरामुपवसेदुत्त-राणि ह वै सोमो यजते साममनुदैवतमेतद्वै देवसोमं यच्चन्द्रमास्तस्मा-दुत्तरामुत्तरामुपवसेत्" इति।

तदप्यमावास्यायां पुरस्ताच्चन्द्रमसमनिर्ज्ञाय शास्त्रमार्गेण चन्द्रोदयो न भविष्यतीति "निश्चित्य यदुपैत्युपवसति यच्च परेद्युर्यज-ते"इति व्याख्यानादमावास्यायाः खण्डत्वे चन्द्रादर्शनदिने उपवासं परेद्युश्च चन्द्रदर्शनदिनेऽपि यागं प्रतिपादयदिव लक्ष्यमाणमप्य-पराह्णसंधिव्यावस्थापितोत्तरोपवासोपसंहारकत्वात्, तस्य च सामान्यप्राप्तस्य यागदिने चन्द्रादर्शनेऽपि संभवादविरुद्धम्।

संभवति च खण्डत्वेऽपि दर्शप्रतिपवृद्धया द्वितीयदर्शोत्तरदिनेऽपि त्रिमुहूर्त्तद्वितीयाप्रवेशाभावेन चन्द्रादर्शनम्। "एतद्वै देवसोमं यच्चन्द्रमाः" इति चन्द्रसद्भावप्रयुक्तायोत्तरदिनयागस्तुतिः। सा संपू-र्णचन्द्रस्यैव। प्रतिपत्प्रभृतिपीयमानत्वात्सोमद्रव्यवदेव प्रीतिकरत्वेन सामर्थ्याद्भाष्यकारैस्तथा व्याख्यानाच्च पौर्णमासीमात्रविषयेति।

तस्माच्चन्द्रदर्शनदिने यागानुष्ठानद्योतकस्यानन्यथासिद्धस्य कस्याप्यसत्त्वात्, पराह्णसंधिशास्त्रस्य च सामान्यरूपस्य चन्द्रादर्शन-विषये संकोचोपपत्तेः "संधिर्यद्यपराह्णेस्या" दित्यस्यापि पौर्णमास्यां सावकाशत्वात्सकलनिबन्धृसंमतैः स्पष्टैर्विधिनिषेधरूपवचनैरमावा-स्यायां सोमदर्शनप्रयुक्तोऽपराह्णसंधिशास्त्रापवादः सर्वेषां क्रियत इति न्याय्यः पन्थाः।

तानि च वचनानि श्रुतिस्मृतिसूत्ररूपाणि बहुतराणि हेमाद्र्यादिनिबन्धेषु द्रष्टव्यानि। अस्माभिस्तु विस्तरभीतैः कानिचिदेव दर्शितानीति।

माधवादयस्तु—पूर्वोक्तविधान्यथासिद्धतैत्तिरीयैतरेयिब्राह्मणरूप-कुशकाशावलम्बनेन स्पष्टविधिनिषेधरूपनानावचनमहापूरपरिपन्थि-तामाचरन्त आश्वलायनापस्तम्बव्यतिरिक्तविषयत्वं चन्द्रदर्शनदिन-यागनिषेधस्य मन्यन्ते।

आपस्तम्बसूत्रभाष्यार्थसंग्रहकारोऽपि पौर्णमासीवदेवामावास्या-निर्णयमाह—

"अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते।
उपोष्या तत्र राका स्यात्सा पूर्णोत्सर्पिलक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
उपोष्यानुमतिस्तत्र सा श्वःपूरितलक्षणा॥
अपराह्णे क्षपायां वा यदि पर्व समाप्यते।
उपोष्या तु कुहुस्तत्र यदहर्नेति लक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने पर्वसन्धिर्यदा भवेत्।
तत्रोपोष्या सिनीवाली श्वो न द्रष्टारलक्षणा"॥ इति—

संधिशास्त्रमेवैकं निर्णायकम्। चन्द्रदर्शनदिनयागनिषेधकानि तु श्रुत्यादिवचनानि सति संभवे तदुपोद्बलकानि न तु विरोधे तदपवादकानीति नामान्तरेण तेषामकिंचित्करत्वादप्रामाण्यमेव यत्स्मृत्यर्थसारादावुक्तं तत्सामान्यविशेषशास्त्रश्रुतिस्मृत्यादिबलाबले आपामरं प्रसिद्धे महत्साहसमित्युपेक्षणीयमेवेत्यलं बहुना क्षोदेन।

यदपि प्रकारान्तरेणेष्टिकालनिर्णयार्थमापस्तम्बवचनम्—

"षोडशेऽहन्यभीष्टेष्टिर्मध्या पञ्चदशेऽहनि।
चतुर्दशे जघन्येष्टिः पापा सप्तदशेऽहनि"॥ इति।

तत्पूर्वेष्टिदिनमारभ्य गणनायां षोडशे दिने यद्युत्तरेष्टिस्तदोत्तमा, पञ्चदशे मध्यमा, चतुर्दशेऽधमा, सप्तदशे न कर्त्तव्येत्येवमर्थकं प्रधानयागविषयतयावभासमानमपीष्ट्युपक्रमान्वाधानपरं व्याख्येयम्। साम्यक्षययोः षोडशपञ्चदशदिनयोरिव वृद्धौ सप्तदशदिने यागविध्यनुपपत्तेः। अन्वाधानस्य तु वृद्धिसाम्यक्षयेषु यजनीयदिनादेवारभ्य षोडशपञ्चदशचतुर्दशदिनेषु विधिः संभवति। "पापा सप्तदशेऽहनि" इति तु "नान्तरिक्षे न दिवि"इतिवत्तद्विषय एव नित्यानुवादः। अत एवान्वाधानविषयमेव बौधायनस्य वाक्यद्वयम्। अत्रौपवसथस्य स्थानानि चतुर्दशी पञ्चदशी षोडशी न तु त्रयोदशी सप्तदशीति।

"यत्रौपवसथं कर्म यजनीयात्त्रयोदशम्।
भवेत्सप्तदशं वापि तत्प्रयत्नेन वर्जयेत्" ॥ इति ॥

अत्र त्रयोदशीनिषेधोऽपि सप्तदशीनिषेधवन्नित्यानुवाद एव। दिनद्वयवृद्धेरिव दिनद्वयक्षयस्याप्यभावात्।

यत्तु वचनान्तरम्—

"ऊने पञ्चदशी याज्या समे याज्या तु षोडशी।
ऊने वाप्यधिके वापि नेज्या सप्तदशी क्वचित्" ॥ इति ॥

तत्रोपवासविषयं संभवति। पूर्वयागदिनादारभ्य तद्दिनगणनायां साम्यवृद्ध्योः पञ्चदशषोडशदिनयोस्तत्प्राप्तेः। न तूनत्वसमत्वयोः। पूर्वोपवासदिनादारभ्य गणनायां वृद्धौ सप्तदशेऽपि द्वितीयोपवासानुष्ठानस्यावश्यकत्वात्तन्निषेधानुपपत्तेः। नापि यागविषयम्। "ऊने पञ्चदशी समे षोडशी" इत्येतदुपपत्तये यागदिनप्रभृतिगणनायां सप्तदशेऽपि यागस्यावश्यकत्वात्। तस्मादयं सप्तदशीनिषेधः प्रधानयाग एव दर्शोत्तरप्रतिपद्यल्पाल्पवृद्ध्या सप्तदश्यां प्रायश्चन्द्रदर्शनसंभवात्तद्विषयो व्याख्येयः।

यस्तु हेमाद्रिणापि "यत्रौपवसथं कर्म" इत्यस्य वचनस्य पूर्वार्द्धोत्तरार्द्धयोरमावास्यापौर्णमासीविषये निषेधत्वमेवेत्येकः पक्ष उक्तः। तस्यायमभिप्रायः—यदा पूर्वयागदिनादारभ्य क्षयेण त्रयोदशी चतुर्दशी सूर्यादूर्ध्वं समाप्ता, चतुर्दश्यमावास्या च तथा। पञ्चदश्यां च प्रतिपदि सूर्यास्तपूर्वंत्रिमुहूर्त्तद्वितीयाप्रवेशेन चन्द्रदर्शनसंभवः। तदा चन्द्रदर्शनदिनयागनिषेधमात्रालोचनेन प्रसक्तं त्रयोदश्यां चतुर्दश्यामन्वाधानं पूर्वार्द्धे निषिध्यते। अत एवास्माभिश्चतुर्दश्यमावास्यादिनेऽमावास्याप्रतिप्रत्प्रवेशावश्यकतोक्ता। एवं यदा सद्यस्कालयागयोग्या पौर्णमासी, पूर्वयागदिनादारभ्य वृद्धया सप्तदशी, तदा सद्यस्कालत्वात्तत्र प्रसक्तमन्वाधानं निषिध्यते।

तेन सद्यस्कालयोग्यायामपि पौर्णमास्यां सप्तदश्यां सत्यां पूर्वाह्णसंधित्वात्तद्दिने यागमात्रम्। अन्वाधानं तु तत्पूर्वदिन इति सद्यस्कालापवाद इति। पौर्णमासीविशेषे च सद्यः सान्वाधानयागानुष्ठानमुक्तं कात्यायनेन।

"संधिश्चेत्सङ्गवादूर्ध्वं प्राक् पर्यावर्त्तनाद्रवेः।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः"॥ इति।

तदपि वैकल्पिकं न नियतम्।

"अन्वाहितिश्चास्तरणोपवासौ पूर्वेद्युरेते खलु पौर्णमास्याम्।
आवर्त्तनात्प्राग्यदि पर्वसंधिः सद्यस्तदा वा क्रियते समस्तम्"॥

इतिसंग्रहकारवचनात्।

एवं च "सद्यो वा"इत्यादिपौर्णमासीविषयं सामान्यरूपं कात्यायनादिवचनमपि विशेषविषयमेव। एकमूलकल्पनालाघवात्। पौर्णमास्यामेव पूर्वाह्णसंधिशास्त्रप्राप्तनिर्णयस्य सद्यस्कालत्वस्य चापवादो वाजसनेयिनां भाष्यार्थसंग्रहकारेणोक्तः।

"मध्यंदिनात्स्यादहनीह यस्मिन्प्राक्पर्वणः संधिरियं तृतीया ।
सा खर्विका वाजसनेयिमत्या तस्यामुपोष्याथ परेद्युरिष्टिः" ॥ इति ॥

इदं च पौर्णमासीविषयमेव । अपराह्णरात्रिसंधिमत्योः प्रथमद्वितीययोः पौर्णमास्योरेव पूर्वमुक्तत्वात् । तदपेक्षयास्यास्तृतीयत्वात् । अमावास्यायां प्रतिपच्चतुर्थांशनिषेधस्येव चन्द्रदर्शननिषेधस्यापि बाधापत्तेश्च । एकबाधेनैव चोपपत्तौ द्वयबाधस्यान्याय्यत्वात् । इदं च द्वितीयदिने प्रातःप्रतिपत्तृतीयांशलाभे वेदितव्यम् । न तु तच्चतुर्थांशमात्रलाभे । तस्यापराह्णसंधावेव यागकालत्वात् ।

इति प्रकृतिर्निर्णीता ।

## अथ विकृतीष्टिकालविवेचनम् ।

दर्शपूर्णमासविकृतयस्त्विष्टिपशुबन्धाः सद्यस्काला एव । "यदीष्ट्या पशुना च" इतिवचनात् । इदं हि वचनं विकृतीनां कालव्यवस्थार्थं सद्यस्कालत्वार्थं चेति साधितं तन्त्रे । तत्र संपूर्णपर्वण्यपराह्णसंधौ च तदा प्रकृतिप्रधानानुष्ठानाभावाद्विकृतिं कृत्वा प्रकृतिरुपक्रमितव्या । "यदीष्ट्या" इतिवाक्यविहितकाललाभादिति मीमांसकानां याज्ञिकानां चाविप्रतिपन्नमेव ।

पूर्वाह्णसंधौ त्वौदयिकपर्वणः प्रकृत्यावरुद्धत्वात्पूर्वपर्वण्येवोपदिष्टपर्वकालत्वानुरोधेनातिदेशप्राप्तं प्रातःकालं द्वैयहकालपवद्बाधित्वा विकृत्यनुष्ठानं युक्तमिति मीमांसकाः । तदुक्तं तन्त्ररत्ने ।

एवं च यद्धूर्त्तस्वाम्यादिभिरुच्यते—"प्रागावर्त्तनात्पर्वावर्त्तने प्रतिपत्पञ्चदशीसंधौ सति कृत्वा प्रकृतिं प्रतिपदि विकृतिः कर्त्तव्या" इति। तदन्याय्यमनभिमतं भगवतो भाष्यकारस्येति।

न च पौर्णमास्यमावास्याशब्दयोर्योगेन पर्वान्त्यक्षणवाचित्वा-त्तत्र च समस्तकर्मानुष्ठानासंभवात्तद्वदहोरात्रलक्षकत्वमिति वाच्यम्। "सोमस्य वै राज्ञोऽर्द्धमासस्य रात्रयः पत्न्य आसंस्तासाममावस्यां च पौर्णमासीं च नोपैत्' इत्याद्यर्थवादगतवैदिकप्रसिद्धेः पामरलोक-प्रसिद्धेश्च तयोस्तिथिवाचित्वस्य तत्रैव व्यवस्थापनात्।

न च पूर्वाह्णसंधिदिन एव विकृतिमनुष्ठाय प्रकृतिरनुष्ठीयताम्। तस्याः प्रतिपद्यप्यविरोधादिति वाच्यम्। प्रकृतावुपदिष्टस्य प्रातः-कालस्य बाधितुमशक्यत्वात्। पूर्वेद्युरनुष्ठाने तूपदिष्टपर्वकालत्वा-नुरोधेन विकृतावतिदिष्टतद्बाधस्य न्याय्यत्वात्। निशीष्ट्यादिवदनन्य-गतिवचनाभावे पूर्वेद्युरन्वाधानेनोपक्रान्तस्य प्रकृतिप्रयोगस्य मध्ये कर्मान्तरानुष्ठानस्यानुचितत्वाच्च। अन्यथा सर्वत्र विकृतौ प्रकृत्यर्था-नुष्ठितानुष्ठास्यमानाङ्गप्रसङ्गप्रसङ्गे निशीष्टावेव तद्विचारस्यानुपपन्न-त्वाद्वैकृतविशेषाणां प्राकृताङ्गाश्रितानां च निरवकाशत्वप्रसङ्गाच्च। अत एव संपूर्णपर्वक्षयपराह्णसंधौ च विकृत्यनुष्ठानानन्तरमेव प्रकृत्यन्वा-धानं युक्तम्। अतिदिष्टविकृतिप्रधानाङ्गप्रातःकालानुरोधाच्च। प्रकृत्यन्वाधानस्य तूपदिष्टोऽपि प्रातःकालोऽङ्गकालत्वाद्बाध्य एवेति।

एवं पूर्वाह्णसंधौ पूर्वपर्वणि विकृत्यनुष्ठानेऽपि द्रष्टव्यम्। याज्ञि-कास्त्वावर्त्तनतत्पूर्वसंध्योः प्रकृत्यनुष्ठानानन्तरं सन्धिदिन एव विकृत्य-नुष्ठानं वदन्ति।

तदुक्तम्—

"आवर्त्तनात्प्राग्यदि पर्वसंधिः
कृत्वा तु तस्मिन्प्रकृतिं विकृत्याः ।
तदैव यागः परतो यदि स्यात्तस्मि—
न्विकृत्याः प्रकृतेः श्व एव" ॥ इति ।

यदत्र हेमाद्रिणा विकृतेरपि प्रातरनुष्ठाननियममभिप्रेत्य पूर्वेद्युः कृत्स्नप्रयोगे तदुपक्रमेवोपदिष्टपर्वकालालाभलक्षणवचनानुग्रहकन्यायोपन्यसनं कृतम् । तदतिदिष्टप्रातःकालबाधस्य न्याय्यत्वादुत्तरेद्युरनुष्ठानेऽप्यावश्यकत्वाच्च यत्किञ्चिदेव । पौर्णमास्यमावास्याशब्दयोः पर्वान्त्यलक्षणवचनत्वं त्वयुक्तमित्युक्तमेव ।

"यः परमो विकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी । यः परः संकर्षः सामावास्या" इति गोभिलसूत्रं तु लोकवेदप्रसिद्धया तिथिवचनयोरेव पौर्णमास्यमावास्याशब्दयोरेकदेशवृत्तिनिमित्तप्रतिपादनार्थम् । भवति चैकदेशवर्त्तिनापि निमित्तेन समस्ताभिधानम् । यथा "कुण्डली देवदत्तः" इति "वैश्वदेवं पर्व" इति च । तस्माच्छ्रुतिमूलकं वचनमेवैतदित्यङ्गीकृत्य याज्ञिकमते श्रद्धातव्यमिति ।

एवमपूर्वे सोमेऽपि मीमांसकमते तिथेरेवाङ्गत्वेनोपदेशात्तस्याश्च निष्कृष्टयोरावर्त्तनतत्पूर्वसंध्योः पूर्वेद्युर्भूयः प्रयोगैकदेशव्याप्तिलाभात्तस्यापि विकृतीष्ट्यादिवत्तयोस्तत्रैवानुष्ठानम् । याज्ञिकमते तु पौर्णमास्यमावास्यशब्दयोस्तिथिवचनत्वेऽपि वचनबलादेवेष्ट्यादिवदेव सोमस्यापि परेद्युरनुष्ठानं तयोः सन्ध्योः । तद्विषयमपि हि क्वचित्प्रामाणिकयाज्ञिकग्रन्थे—

"खण्डे पर्वणि सोमश्चेत्प्रतिपन्मिश्रपर्वणि ।
सोमसुत्या प्रयोक्तव्येत्याह कौषीतकी श्रुतिः" ॥

इति त्रिकाण्डवचनम् ।

"एतेन सोमकालो व्याख्यातः" इति च दर्शपूर्णमासविकृतिकालनिर्णयप्रकारातिदेशकं सङ्कर्षकाण्डसूत्रवचनं लिखितम् ।

संधिवचनत्ववादिनां तु याज्ञिकानां तद्वदहोरात्रलक्षणाया आवश्यकत्वान्न्यायोऽप्येतद्वचनानुग्राहको लभ्यत इति सुतरां तथानुष्ठानं युक्तम् । याज्ञिकाचारोऽप्येवमेवेति ।

आग्रयणेष्टौ तु विशेषः श्रुतावुक्तः । "यस्मिन्कालेऽमावास्या सम्पद्येत तयेष्ट्वाथैतया यजेत यदि पौर्णमासी स्यात्तयेष्ट्वाथ पौर्णमासेन यजेत" इति । अमावास्या दर्शेष्टिः । तयामावास्यया । एतया आग्रयणेष्ट्या ।

इदं चैतया वाचोयुक्त्या पर्यवसन्नं पौर्णमास्यमावास्येष्ट्योरन्तरा आग्रयणाननुष्ठानम् । "व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेताऽयवेभ्यो यवैरिष्ट्वा यवैरेव यजेताव्रीहिभ्यः" इतिश्रुतिबलाद्व्रीहियवव्रीह्याग्रयणरूपपूर्वोत्तरावधिव्यवस्थितप्रकृतौ येषां व्रीहियवानुष्ठानं तद्विषयम् । पौर्णमासैकहविष्कत्वनियमाद्दर्शस्य ।

तथा च "अथ यदहश्चन्द्रमा न दृश्येतताममावास्याम्" इतिगोभिलगृह्ये भाष्यम्—अथेति पूर्वप्रकृतापेक्षः । यत्पौर्णमास्यां यागार्थं हविरुपकृतं तदमावास्यायामप्युपकल्पनीयमित्यर्थः । कुतः "दर्शान्तं पौर्णमाद्येकं कर्म" इतिवचनात् । येन हविषा कर्म प्रक्रान्तं तेनैव समाप-

नोयमिति च न्यायादिति । पौर्णमास्यां पूर्वमाग्रयणानुष्ठानं सद्यस्कालप्रकृत्यनुष्ठानविषयमिति हेमाद्रिरिति शिवम् ।

पर्वणोऽशास्त्रयः पूर्वे कालोऽन्वाधानकर्मणः ।
तच्चतुर्थांशसहिता आद्याः प्रतिपदस्त्रयः ॥
प्रातःस्थिता यजेः पर्वतृतीयोऽपि तुरीयकः ।
पक्षादेश्च क्वचित्कैश्चिद्यागकालः समाश्रितः ॥
आवर्त्तने ततः प्राग्वा यदि पर्व समाप्यते ।
तदन्वाधाय पूर्वेद्युस्तदहर्याग इष्यते ॥
ईदृश्यामपि राकायां मते वाजसनेयिनाम् ।
व्रतमेव परत्रेष्टिर्लाभस्तत्समयस्थ चेत् ॥
सङ्गवावर्त्तनान्तर्या पौर्णमासी समाप्यते ।
तस्यां सद्यो विकल्पेन सान्वाधानयजेर्विधिः ॥
यदा संधिदिने यागस्तदाप्येतत्समापनम् ।
प्रतिपन्मध्य एव स्यात्पुनर्यागोऽन्यथा भवेत् ॥
प्रतिपत्क्षयवृद्ध्यर्धप्रक्षेपेण च पर्वणि ।
इह संधिर्विनिर्णेयो न यथास्थितदर्शनात् ॥
ऊर्ध्वमावर्त्तनात्संधौ तद्दिनेऽन्वाहितिर्भवेत् ।
परत्रेष्टिः पौर्णमास्यां दर्शेऽप्येवं न चेद्विधोः ॥
प्रतीच्यां दर्शनं तत्र सति त्वत्रेन्दुदर्शने ।
यागः संधिदिने तस्मात्पूर्वत्रान्वाहितिर्यदि ॥
प्रवेशो दर्शपक्षत्योरन्वाधानेष्टिपक्षयोः ।
सूर्यास्तोत्तरसंधौ तु सत्यपीष्टिद्दिने विधोः ॥

दृष्टौ तत्रैव यागः स्यादिति प्रामाणिकी स्मृतिः ।
हेमाद्रिस्तु निशासंधावत्यन्तापचये तिथेः ॥
द्वितीयाप्रभृति ब्रूते पूर्णे दर्शे यजेः कृतिम् ।
भूते चान्वाहितिश्राद्धपित्रिज्यानामनुष्ठितिम् ॥
यैस्त्वापस्तम्बमुन्युक्तमाध्वर्यवमुरीकृतम् ।
तेषां चन्द्रे क्षणेऽपीष्टेस्तैत्तिरीयश्रुतौ स्तुतेः ॥
निषेधाभावतः पौर्णमासीवद्दर्शनिर्णयः ।
विकाराः पूर्णमासादेरिष्टयः पशवस्तथा ॥
स्वतन्त्राः सद्य एव स्युः पर्वण्येव न तु द्व्यहम् ।
तत्र पर्वणि संपूर्णे मध्याह्नात्परतोऽथवा ॥
समाप्ते विकृतीः कृत्वा प्रकृतीष्टेरुपक्रमः ।
मध्याह्नतत्पूर्वसंधौ बहुयाज्ञिकदर्शने ॥
तद्दिने प्रकृतिं कृत्वा विकृतीनामनुष्ठितिः ।
अमावास्यापौर्णमासीशब्दाभ्यां संधिबोधनात् ॥
मीमांसकमते कृत्वा पूर्वेद्युर्विकृतिं ततः ।
अन्वाधाय संधिदिने प्रकृतीष्टेः समापनम् ॥
अमावास्यापौर्णमासीशब्दाभ्यां तिथिकीर्तनात् ।
न चेज्यायां विशेषोऽयं केषांचिद्वचनोदितः ॥
पौर्णमासस्य दर्शस्य चान्तराले न सा भवेत् ।
किन्तु प्राक् पौर्णमासेष्टेर्दर्शेष्टेः परतो भवेत् ॥
पर्वण्यखण्डे खण्डे वेत्येवं पर्वविनिर्णयः ।

इति श्रीपदवाक्यप्रमाणाभिज्ञश्रीमाधवविद्वद्वर्यात्मजसम्राट्स्थ—पतिरघुनाथवाजपेययाजिकृतौ पर्वनिर्णयः ॥

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiranavali Bhaskara, a Commentary on Udayana's Kiranavali, Dravya Section, by Padmanabha Misra.
Ed. With Introduction and Index by Gopinath Kaviraj, M. A. Rs. 1-12

No. 2—The Advaita Chintamani, by Rangoji Bhatta,
Ed. with Introduction etc. by Narayan Sastri Khiste Sahityacharya. Rs. 1-12

No. 3—The Vedanta Kalpalatika, Madhusudana Sarasvati.
Edited with Introduction etc. by Ramajna Pandeya Vyakaranacharya. Rs. 1-12

No. 4—The Kusumanjali Bodhani'a Commentary on Udayan'as Theistic Tract, Nyaya Kusumanjali, by Varadaraja. Ed. with Introduction etc. by Gopinath Kaviraj, M. A. Rs. 2-0

No. 5—The Rasasara, a Commentray on Udayana's Kiranavali, Guna Section, by Bhatta Vadindra.
Ed. with Indroduction etc. by Gopinath Kaviraj, M. A. Rs. 1-2

No. 6—(Part 1)—The Bhavana Viveka by Mandana Misra, with a Commentary by Bhatta Umbeka.
Ed. with Introduction etc. by M. M. Ganganatha Jha, M. A., D. Litt, Rs. 0-12

No. 6—(Part II)—Ditto Ditto Rs. 0-12

No. 7—(Part I)—The Yoginihrdaya dipika, by Amrtananda Natha, being a Commentary on Yoginihrdaya, a part of Vamakesvara Tantra.
Ed. with Introduction etc. by Gopinath Kaviraj, M. A. Rs. 1-8

No. 7—(Part II) Ditto Ditto Rs. 1-4

No. 8—The Kavyadakini, by Gangananda Kavindra.
Ed. with Introduction etc. by Jagannatha Sastri Hoshing Sahityopadhyaya. Rs. 0-10

No. 9—(Part I)—The Bhakti Chandrika, a Commentary on S'andilya's Bhaktisutras, by Narayana Tirtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs. 0-15

No. 10—(Part I)—The Siddhantaratna, by Baladeva Vidyabhusana.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs. 1-2

No. 10.—(Part II)—Do. Do. Rs. 2-12

No. 11—The Sri Vidya Ratna Sutras, by Gaudapada, with a Commentray by Sankararanya.
Ed. with Introduction etc. by Narayana Sastri Khiste Sahityacharya. Rs. 1-2

No. 12—The Rasapradipa, by Prabhakara Bhatta.
Ed. with Introduction etc. by Narayana Sastri Khiste Sahityacharya. Rs. 1-2

No. 13—The Siddhasiddanta Sangraha, by Balabhadra.
Ed. with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14—The Trivenika, by Asadhara Bhatta.
Ed. with Introduction by Batukanatha S'arma Sahityopadhyaya, M. A. and Jagannatha Sastri Hoshing Sahityopadhyaya. Rs. 0-14

No. 15—(Part I) The Tripurarahasya. ( Jnana Khanda )
Ed. with a Prefatory Note by Gopinath Kaviraj M. A. Rs. 0-14

No. 15—( Part II )—Do. Do. Rs. 2-4

No. 15—( Part III )—Do. Do. Rs. 2-0

No. 15—( Part IV )—Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16—The Kavya Vilasa, by Chiranjiva Bhattacharya.
Ed. with Introduction etc. by Batukanatha S'arma Sahityopadhyaya. Rs. 1-2

No. 17—The Nyaya Kalika, by Bhatta Jayanta.
Ed. with Introduction by M. M. Ganganatha Jha, M. A., D. Litt. Rs. 0-14

No. 18—(Part I)—The Goraksa Siddhanta Sangraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs. 0-14

No. 19—(Part I)—The Prakrita Prakasa by Vararuchi with the Prakrita Sanjivani by Vasantaraja and the Subodhini by Sadanada.
Ed. with Prefatory Note etc. by Batuk Nath Sarma, M. A. and Baladeva Upadhyaya, M. A. Ks. 2-4

No. 19—( Part II ) Dito Dito Rs. 2-12

No. 19—( Part III ) Introduction etc. ( In preparation )

No. 20—The Mansatattvaviveka by Visvanatha Nyayapancanana Bhattacharya.
Edited with Introduction etc. by Jagannatha Sastri Hoshing Sahityopadhyaya, with a Foreword by Pandit Gopi Nath Kaviraja, M. A., Principal, Government Sanskrit College, Benares. Rs. 2-12

No. 21—(Part I)—The Nyaya Sidhanta Mala by Jayarama Nyaya Panchanana Bhattacharya.
Edited with Introduction etc. by Mangal Deva Sastri M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana Benares. Rs. 1-2

No. 21—(Part II) Ditto Ditto Rs. 2-0

No. 22—The Dharmanubandhi Slokachaturdasi by Sri Sesa Krsna with a Commentary by Rama Pandit.
Edited with Introduction etc. by Narayana Sastri Khiste Sahityacharya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1-0

No. 23—Navaratrapradipa by Nanda Pandit Dharmadhikari.
Ed. with Introduction etc. by Vaijanatha Sastri

Varakale, Dharmasastra-Sastri, Sadholal Research Scholar, Sanskrit College, Benares, with a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares. Rs. 2 0

No. 24—The Sri Ramatapiniyopanisad with the Commentary called Rama Kasika in Purvatapini and Anandanidhi in Uttaratapini by Anandavana.
Ed. with Introduction etc. by Anantarama Sastri Vetala Sahityopadhyaya, Post-acharya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopi Natha Kaviraja, M. A. Principal, Government Sanskrit College Benares. Rs. 3-12

No. 25—The Sapindyakalpalatika by Sadasivadeva alias Apadeva with a Commentary by Narayana Deva.
Edited with Introduction etc. by Jagannatha Sastri Hosinga, Sahityopadhya, Sadholal Research Scholar, Govt. Sanskrit College, Benares. Rs. 1-4

No. 26—The Mrigankalekha Natika by Visvanatha Deva Kavi.
Edited with Introduction etc. by Narayana Sastri Khiste Sahityacharya. Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27—The Vidvacharita Panchakam by Narayana Sastri Khiste, Sahityacharya. Assistant Librarian, Govt. Sanskrit College Library, Sarasvati Bhavana, Benares. With an Introduction by Gopinath Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs. 2-0

No. 28—The Vrata Kosa by Jagannatha Sastri Hosinga Sahityopadhyaya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by Principal Gopinath Kaviraja, M. A.,
Principal, Govt. Sanskrit College Benares. Rs. 4-0

No. 29—The Vritti dipika by Mauni Sri Krsna Bhatta.
Edited with Introduction etc. by Pt. Gangadhara Sastri Bharadvaja, Professor, Govt. Sanskrit College Benares. Rs. 1-2

No. 30—The Padartha Mandanam By Sri Venidatta.
Edited with Introduction etc.by Pandit Gopala Sastri Nene, Professor, Govt Sanskrit College, Benares. Rs. 0-14

No. 31—( Part I )—The Tantraratna by Partha Sarathi Misra.
Edited by M. M. Dr. Ganganatha Jha. M. A., D. Litt, Vice—Chancellor. Allahabad University, Allahabad. Rs. 1-14

No. 32—The Tattvasara by Rakhaldasa Nyayaratna.
Edited with Introduction etc. by Harihara Sastri, Benares Hindu University.

No. 33—The Nyaya Kaustubha ( Part I ) by Mahadeva Puntamkar. Edited with Introduction etc. by Umesa Misra, M. A., Allahabad University, Allahabad.

No. 34—(Part I) The Advaita Vidyatilakam by Sri Samarapungava Diksita. With a Commentary by Sri Dharmayya Diksita.
Edited with Introduction, etc. by Ganapati Lal Jha, M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares.

No. 35—The Dharma Vijaya Nataka by Bhudeva Sukla.
Edited with Introduction etc. by Pandit Narayana Sastri Khiste, Asst. Librarian, Govt. Sanskrit Library, Benares.

No. 36—The Ananda Kanda Champu, by Mitra Misra.
Edited with a Foreword by Gopinath Kaviraj, M. A. by Nanda Kishore Sahtyacharya, Research Scholar, Sanskrit College, Benares.

No. 37—The Upanidana Sutra Edited with Introduction by Dr. Mangal deva Sastri, M. A D. phil, Librarian Govt. Sanskrit Library, Benares.

No. 38—The Kiranavali prakas´a didhiti ( Guna section ) by Raghu natha Siromani.
Edited with Introduction by Pandit Badri nath

Sastri, M. A., Lecturer in Sanskrit, Lucknow University, Lucknow.

No. 39—The Rama Vijaya Maha Kavya, by Rupa Natha. Edited with Introduction by Pandit Ganapati lal Jha, M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares.

No. 40—(Part I)—The Kalatattva Vivechana, by Raghunatha Bhatta. With a Foreword by Principal Gopinath Kaviraj. Edited with Introduction by Pandit Nanda Kishore Sarma Sahityacharya, Research Scholar, Govt. Sanskrit Library, Benares.

## THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its Evolution, by Ganganatha Jha,

(b) The View-point of Nyaya Vaisesika Philosophy, by Gopinath Kaviraj.

(c) Nirmana Kaya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Parasurama Misra alias Vani Rasala Raya, by Gopinath Kaviraj.

(b) Index to Sabara's Bhasya, by the late Col. G. A. Jacob.

(c) Studies in Hindu Law (2):—its sources, by Ganga natha Jha.

(d) A New Bhakti Sutra, by Gopinath Kaviraj.

(e) The System of Chakras according to Goraksa natha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka natha Sarma.

(h) A Seventeenth Century Astrolabe, by Padmakara Dvivedi.

(i) Some aspects of Vira Saiva Philosophy, by Gopinath Kaviraj.

(j) Nyaya Kusumanjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Narayana Sastri Khiste.

(l) Sondala Upadhyaya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to Sabara's Bhasya, by the late Col. G. A. Jacob.

(b) Studies in Hindu Law (3):—Judicial Procedure: by Ganganatha Jha.
(c) Theisim in Ancient India, by Gopinath Kaviraj.
(d) History and Bibliography of Nyaya Vaisesika Literature, by Gopinath Kaviraj.
(e) Naisadha and Sri Harsa, by Nilakamala Bhattacharya.
(f) Indian Dramaturgy, by P. N. Patankar. Rs. 5

Vol IV—
(a) Studies in Hindu Law (4): Judicial Procedure: by Ganganatha Jha.
(b) History and Bibliography of Nyaya Vaisesika Literature, by Gopinath Kaviraj.
(c) Analysis of the Contents of the Rigveda-Pratisakhya, by Mangala Deva Sastri.
(d) Narayana's Ganita kaumudi, by Padmakara Dvivedi.
(e) Food and drink in the Ramayanic Age, by Manmathanath Roy.
(f) Satkaryavada: Causality in Sankhya, by Gopinath Kaviraj.
(g) Discipline by Consequences, by G. L. Singha.
(h) History of the origin and expansion of the Aryans, by A. C. Ganguly.
(i) Punishments in Ancient Indian Schools, by G. L. Singha. Rs. 5

Vol. V—
(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.
(b) A Satrap Coin, by Shyamalal Mehr.
(c) An estimate of the civilisation of the Vanaras as depicted in the Ramayana, by Manmathanatha Roy
(d) A Comparison of the Contents of the Rigveda, Vajasaneya, Taittiriya & Atharvaveda Pratisakhyas, by Mangala Deva Sastri.
(e) Formal Training and the Ancient Indian Thought, by G. L. Sinha.

(f) History and Bibliography of Nyaya Vaisesika Literature, by Gopinath Kaviraj.

(g) A Descriptive Index to the names in Ramayana, by Manmatha nath Roy.

(h) Notes and Queries, (1) Virgin Worship, by Gopinatha Kaviraj. Rs. 5.

Vol. VI—

(a) Index to Sabara's Bhasya, by the late Col. G. A. Jacob.

(b) Some Aspects of the History and Doctrines of the Nathas, by Gopinath Kaviraj.

(c) An Index etc. to the Ramayana, by Manmatha nath Roy.

(d) Studies in Hindu Law, by M. M. Ganganatha Jha.

(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopinatha Kaviraj.

(f) Notes and Queries, by Gopinatha Kaviraj.

Vol. VII—

(a) Bhamaha and his Kavyalankara, by Batukanath Sarma and Baladeva Upadhyaya.

(b) Some variants in the readings of the Vaisesika Sutras, by Gopinatha Kaviraj.

(c) History and Bibliography of Nyaya Vaisesika Literature, by Gopinath Kaviraj.

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sitaram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya, Taittiriya, and Atharva Veda (Chaturadhyayika ) Pratisakhyas, by Mangal Deva Shastri.

(f) An Index to the Ramayana, by Manmatha Nath Roy.

(g) An Index to Sabara's Bhasya, by the late Col. J. A. Jacob.

(h) Gleanings from the Tantras, by Gopinath Kaviraj.

(i) The date of Madhusudana Sarasvati, by Gopinatha Kaviraj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinatha Kaviraj.

(k) A Note on the meaning of the word Parardha, by Umesa Mis̈ra.

Vol. VIII—

(a) Indian Philosophy, by Taraknath Sanyal.

(b) An Index to the Ramayana, by Manmatha Nath Roy.

(c) Index to Sabara's Bhasya, by the late Col. G. A. Jacob.

(d) Hari Svami, the Commentator of Satapatha Brahmana and the date of Skanda Svami, the Commentator of the Rigveda by Mangala Deva Sastri.

(e) Mysticism in Veda, by Gopinath Kaviraj.

(f) The Devadasi: a brief history of the Institution, by Manmathanath Roy.

Vol. IX—( In progress )

(a) The Life of a Yogin, by Gopinath Kaviraj.




To be had of
*The Superintendent*
GOVERNMENT PRESS, U. P.,
ALLAHABAD.